प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती
प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती ।
गिरिगरिमनितम्बाच्छादने सावधाना
तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥ ११ ॥
(कस्यापि)

वीरक्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुष-
स्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्तां कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुर-
ग्रासासक्तमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १२ ॥
भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी दिवं
याता ब्रह्ममरालसंगमवशाद्या तत्र गुर्विण्यभूत् ।
पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ १३ ॥
(महानाटकात्)

तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यं
न्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयन्दिग्वधूभिः ।
राकाचन्द्रातपत्रं दिनकरमुकुरं ग्राहयँल्लोकपाला-
न्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्तीबघेल ॥ १४ ॥
(अकबरीयकालिदासस्य)

यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ १५ ॥
(कस्यापि)

राजन्नचण्डरुचिमण्डलपुण्डरीका
दिग्दन्तिवक्त्रविचरन्नवदन्तिनक्रा ।

प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती
प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती ।
गिरिगरिमनितम्बाच्छादने सावधाना
तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥ ११ ॥
(कस्यापि)

वीरक्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुष-
स्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्तां कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुर-
ग्रासासक्तमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १२ ॥
भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी दिवं
याता ब्रह्ममरालसंगमवशाद्या तत्र गुर्विण्यभूत् ।
पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ १३ ॥
(महानाटकात्)

तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यं
न्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयन्दिग्वधूभिः ।
राकाचन्द्रातपत्रं दिनकरमुकुरं ग्राहयँल्लोकपाला-
न्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्तीबघेल ॥ १४ ॥
(अकबरीयकालिदासस्य)

यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ १५ ॥
(कस्यापि)

राजन्नचण्डरुचिमण्डलपुण्डरीका
दिग्दन्तिवक्त्रविचरन्नवदन्तिनका ।

उद्बुद्ध··············नीरधिबुद्बुदाली
कल्लोलिनीव तव वल्गति मल्लकीर्तिः ॥ १६ ॥
(लक्ष्मणस्य)

**अथ द्विषत्कीर्तिः—**

रघुतिलकनृपाल त्वद्विषत्क्षोणिपाल-
प्रविलसदपकीर्तिश्यामले विश्वजाले ।
भगवति भजमाने कृष्णतां शूलपाणौ
किमुदधिगिरिपुत्र्यौ चक्रतुस्तत्र विघ्नः ॥ १७ ॥
(लक्ष्मणस्य)

**अथ शौर्यौदार्यप्रधाना कीर्तिः—**

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या पतन्ती च दृष्टा ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥१८॥
कस्यापि । (हर्षदत्तस्य)

**अथ प्रतापः—**

अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजा-
महोष्मततिसंजुषा बत भवत्प्रतापार्चिषा ।
द्विषामतिभृशं यशःप्रकटपारदोध्मापना-
दुदुस्फुटत तारकाः कपटतो विहायस्तटे ॥ १९ ॥
(लक्ष्मणस्य)

क्षोणीपर्यटनव्रते क्षितिपते युष्मत्प्रतापो भ्रम-
न्सौराष्ट्रे मगधे कलिङ्गसविधे वङ्गे यदङ्गे गतः ।
तत्पापं परिहर्तुमम्बरमणिव्याजेन सप्तार्णवे
स्नात्वा विष्णुपदं स्पृशन्नपि भृशं भूयः परिश्राम्यति ॥ २० ॥
(कस्यापि)

उद्बुद्ध..............नीरधिबुद्बुदाली
कल्लोलिनीव तव वल्गति मल्लकीर्तिः ॥ १६ ॥
(लक्ष्मणस्य)

**अथ द्विषत्कीर्तिः—**

रघुतिलकनृपाल त्वद्विषत्क्षोणिपाल-
प्रविलसदपकीर्तिश्यामले विश्वजाले ।
भगवति भजमाने कृष्णतां शूलपाणौ
किमुदधिगिरिपुत्र्यौ चक्रतुस्तत्र विघ्नः ॥ १७ ॥
(लक्ष्मणस्य)

**अथ शौर्यौदार्यप्रधाना कीर्तिः—**

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या पतन्ती च दृष्टा ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥१८॥
कस्यापि । (हर्षदत्तस्य)

**अथ प्रतापः—**

अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजा-
महोष्मततिसंजुषा बत भवत्प्रतापार्चिषा ।
द्विषामतिभृशं यशःप्रकटपारदोध्मापना-
दुदुस्फुटत तारकाः कपटतो विहायस्तटे ॥ १९ ॥
(लक्ष्मणस्य)

क्षोणीपर्यटनव्रते क्षितिपते युष्मत्प्रतापो भ्रम-
त्सौराष्ट्रे मगधे कलिङ्गसविधे वङ्गे यदङ्गे गतः ।
तत्पापं परिहर्तुमम्बरमणिव्याजेन सप्तार्णवे
स्नात्वा विष्णुपदं स्पृशन्नपि भृशं भूयः परिभ्राम्यति ॥ २० ॥
(कस्यापि)

अध्यायोधनवेदि मार्गणकुशानास्तीर्य खड्गस्त्रुचा
   हुत्वारेः पललं चरुं हविरसृक् तन्मस्तकस्वस्तिकैः ।
संवेष्ट्याहवनीयमानसदसिख्योऽसौ प्रतापानलो-
   ऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २१ ॥
(धरणीधरस्य)

येनोद्दग्धात्त्वदरिनिकरार्द्रेन्धनव्रातकात्सं-
   भूतो धूमो गगनमसितत्वं निनायावलक्षम् ।
भूबिम्बाहस्कर नरपते हारिसिंह त्वदीयो-
   ऽनन्तापीठे खलु विजयते स प्रतापकृशानुः ॥ २२ ॥
(भोगिसूनोर्वेणीदत्तस्य)

लङ्काधामनि वीर भानुनृपतेः प्रेक्ष्य प्रतापोदयं
   प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् ।
क्षुभ्यद्द्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खल-
   द्बाष्पश्रेणि विलोलवेणि दयितं कण्ठस्थले बिभ्रति ॥ २३ ॥

क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलै-
   र्द्रागेव द्रवरूपतामुपगते चामीकराणां चये ।
भ्रश्यद्वासवधामधोरणि मुहुर्मज्जद्गृहग्रामणि
   त्रस्यत्कामिनि निष्पतद्वनितलं मेरोः समुन्मीलति ॥ २४ ॥

   त्वत्प्रतापानलज्वालादग्धं दुग्धोदधिं पुनः ।
   नास्वादयति विस्वादमगस्त्यो विस्तृताञ्जलिः ॥ २५ ॥
(एते भानुकरस्य)

कूर्मः पादोऽत्र यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
   तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः ।
ज्योतिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमानाः
   शत्रुश्रेणीपतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ २६ ॥
(महानाटकात्)

अध्यायोधनवेदि मार्गणकुशानास्तीर्य खड्गस्रुचा
हुत्वारेः पललं चरुं हविरसृक् तन्मस्तकस्वस्तिकैः ।
संवेष्याहवनीयमानसदसिख्योऽसौ प्रतापानलो-
ऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २१ ॥
(धरणीधरस्य)

येनोद्दग्धात्त्वदरिनिकरार्द्रेन्धनव्रातकात्सं-
भूतो धूमो गगनमसितत्वं निनायावलक्षम् ।
भूबिम्बाहस्कर नरपते हारिसिंह त्वदीयो-
ऽनन्तापीठे खलु विजयते स प्रतापकृशानुः ॥ २२ ॥
(भोगिसूनोर्वेणीदत्तस्य)

लङ्काधामनि वीर भानुनृपतेः प्रेक्ष्य प्रतापोदयं
प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् ।
क्षुभ्यद्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खल-
द्बाष्पश्रेणि विलोलवेणि दयितं कण्ठस्थले बिभ्रति ॥ २३ ॥

क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलै-
र्द्रागेव द्रवरूपतामुपगते चामीकराणां चये ।
भ्रश्यद्वासवधामधोरणि मुहुर्मज्जद्ग्रहग्रामणि
त्रस्यत्कामिनि निष्पतद्वनितलं मेरोः समुन्मीलति ॥ २४ ॥

त्वत्प्रतापानलज्वालादग्धं दुग्धोदधिं पुनः ।
नास्वादयति विस्वादमगस्त्यो विस्तृताञ्जलिः ॥ २५ ॥
(एते भानुकरस्य)

कूर्मः पादोऽत्र यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः ।
ज्योतिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमानाः
शत्रुश्रेणीपतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ २६ ॥
(महानाटकात्)

अथ कीर्तिप्रतापौ—

क्षितिप किमपि चित्रं जागरूकेऽपि युष्म-
यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे ।
नयनकुवलयानि त्वद्विषत्कामिनीना-
मपि च वदनपद्मान्याशु यत्संकुचन्ति ॥ २७ ॥

(लक्ष्मणस्य)

त्वत्प्रतापार्कबिम्बेनासह्येन विकचीकृता ।
कीर्तिस्ते भाति विगतालिव्रजाङ्केव पद्मिनी ॥ २८ ॥

(भोगिसूनोर्वेणीदत्तस्य)

कीर्त्यास्य चन्द्रकरकोमलयातिशुभ्रं
शोणं नवार्ककिरणप्रतिमप्रतापैः ।
श्यामद्युति द्विषदकीर्तिमसीभिरित्थं
चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥ २९ ॥

(अम्बष्ठस्य)

अथ दानम्—

देव क्षोणितलाधिपे त्वयि महादानप्रधाने विधौ
चेतः कुर्वति पातयत्यपि दृशं स्वर्णादिके वस्तुनि ।
विप्राणामतिघोरधारकठिनद्योतत्कुठारोद्यता-
घातप्रस्फुटिताङ्गसंधिचकितो मेरुः परं दूयते ॥ ३० ॥
अन्यार्थमङ्गीकृतवारिपाणौ विशङ्कमानस्तव दानवारि ।
परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ ३१ ॥

(एतौ लक्ष्मणस्य)

दाने द्राघीयसि कपटतः स्वस्तटिन्याः कठिन्या-
.................तव कृतवता.........गारभित्तौ ।
नापि प्रापि क्वचिदपि.......श्रीनिजामद्वितीय-
स्तेनाकारि स्थगितमनसा वेधसा बिन्दुरिन्दुः ॥ ३२ ॥

**अथ कीर्तिप्रतापौ—**

क्षितिप किमपि चित्रं जागरूकेऽपि युष्म-
यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे ।
नयनकुवलयानि त्वद्विषत्कामिनीना-
मपि च वदनपद्मान्याशु यत्संकुचन्ति ॥ २७ ॥

(लक्ष्मणस्य)

त्वत्प्रतापार्कबिम्बेनासह्येन विकचीकृता ।
कीर्तिस्ते भाति विगतालिव्रजाङ्केव पद्मिनी ॥ २८ ॥

(भोगिसूनोर्वेणीदत्तस्य)

कीर्त्यास्य चन्द्रकरकोमलयातिशुभ्रं
शोणं नवार्ककिरणप्रतिमप्रतापैः ।
श्यामद्युति द्विषदकीर्तिमसीभिरित्थं
चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥ २९ ॥

(अम्बष्ठस्य)

**अथ दानम्—**

देव क्षोणितलाधिपे त्वयि महादानप्रधाने विधौ
चेतः कुर्वति पातयत्यपि दृशं स्वर्णादिके वस्तुनि ।
विप्राणामतिघोरधारकठिनद्योतत्कुठारोद्यता-
घातप्रस्फुटिताङ्गसंधिचकितो मेरुः परं दूयते ॥ ३० ॥
अन्यार्थमङ्गीकृतवारिपाणौ विशङ्कमानस्तव दानवारि ।
परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ ३१ ॥

(एतौ लक्ष्मणस्य)

दाने द्राघीयसि कपटतः स्वस्तटिन्याः कठिन्या-
.................तव कृतवता............गारभित्तौ ।
नापि प्रापि क्वचिदपि.......श्रीनिजामद्वितीय-
स्तेनाकारि स्थगितमनसा वेधसा बिन्दुरिन्दुः ॥ ३२ ॥

यशःकिरणधोरणीतुलितरोहिणीवल्लभ
त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः ।
पयोधरमहीधरे नटति तस्य वामभ्रुवां
रणत्कनककिङ्किणीकलरवेण देवस्मरः ॥ ३३ ॥

(एतौ भानुकरस्य)

म्लायद्वक्त्ररुचः कदन्नकणिकाकुक्षिंभरा भिक्षवो
ये केचित्क्षितिकामरामनृपतेः पु····दृशो गोचराः ।
तत्तत्कान्तकुटुम्बिनीश्रुतिनटत्ताटङ्करत्नाङ्कुर-
ज्योत्स्नाभिर्जटिलीभवन्ति भुवने का वा न दिग्भित्तयः ॥ ३४ ॥

(रामचन्द्रस्य)

अनेन सर्वार्थिकृतार्थता कृता हृतार्थितौ कामगवीसुरद्रुमौ ।
मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्लुतः ॥ ३५ ॥

(श्रीहर्षस्य)

देव त्वत्करनीरदे दिशि दिवि प्रारब्धपुण्योन्नतौ
चञ्चत्कङ्कणरत्नराजि तडिति स्वर्णामृतं[1] वर्षति ।
स्फीता कीर्तितरङ्गिणी समभवत्तृप्ता गुणग्रामभूः
पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ ३६ ॥

(महानाटकात्)

त्वया वीरगुणाकृष्टा ऋजुदृष्ट्या विलोकिताः ।
लक्ष्यं लब्ध्वैव गच्छन्ति मार्गणा इव मार्गणाः[2] ॥ ३७ ॥

(कस्यापि)

**अथ विदाय[3]ः—**

लक्ष्मीविभ्रमकुञ्जकल्पविटपिन्विद्वत्कृपावारिधे
दृष्टिं स्नेहनिधे निधेहि महतीं दीने दयार्द्रां पुनः ।

---

१. पानीयम्. २. याचकाः. ३. गमनानुमतिः.

यशःकिरणधोरणीतुलितरोहिणीवल्लभ
त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः ।
पयोधरमहीधरे नटति तस्य वामभ्रुवां
रणत्कनककिङ्किणीकलरवेण देवस्मरः ॥ ३३ ॥
(एतौ भानुकरस्य)

म्लायद्वक्त्ररुचः कदन्नकणिकाकुक्षिंभरा भिक्षवो
ये केचित्क्षितिकामरामनृपतेः पु····द्दृशो गोचराः ।
तत्तत्कान्तकुटुम्बिनीश्रुतिनटत्ताटङ्करत्नाङ्कुर-
ज्योत्स्नाभिर्जटिलीभवन्ति भुवने का वा न दिग्भित्तयः ॥ ३४ ॥
(रामचन्द्रस्य)

अनेन सर्वार्थिकृतार्थता कृता हृतार्थितौ कामगवीसुरद्रुमौ ।
मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्लुतः ॥ ३५ ॥
(श्रीहर्षस्य)

देव त्वत्करनीरदे दिशि दिवि प्रारब्धपुण्योन्नतौ
चञ्चत्कङ्कणरत्नराजि तडिति स्वर्णामृतं वर्षति ।
स्फीता कीर्तितरङ्गिणी समभवत्तृप्ता गुणग्रामभूः
पूर्णे चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ ३६ ॥
(महानाटकात्)

त्वया वीरगुणाकृष्टा ऋजुदृष्ट्या विलोकिताः ।
लक्ष्यं लब्ध्वैव गच्छन्ति मार्गणा इव मार्गणाः ॥ ३७ ॥
(कस्यापि)

**अथ विदायः[3]—**

लक्ष्मीविभ्रमकुञ्जकल्पविटपिन्विद्वत्कृपावारिधे
दृष्टिं स्नेहनिधे निधेहि महतीं दीने दयार्द्रां पुनः ।

---

१. पानीयम्. २. याचकाः. ३. गमनानुमतिः.

अस्मद्द्वारिनिबद्धसिन्धुरघटाव्यालोलकर्णानिलैः
पीयन्तामरविन्दसुन्दरदृशां स्वेदाम्भसां बिन्दवः ॥ ३८ ॥
क्रीडामूलं दुकूलं दलितरिपुमहीपालवृन्दं गजेन्द्रं
दत्वा तुङ्गं तुरङ्गं विरचय वसुधानाथ तावद्विदायम् ।
युष्मत्सत्कारभाजं दिशि दिशि चकितैः प्रेक्ष्य मामक्षिपातै-
र्वक्षोजाभोगभूमौ विलुठतु पुलकश्रेणिरेणेक्षणानाम् ॥ ३९ ॥
(एतौ भानुकरस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट**कृतायां **पद्यरचना**यां द्वितीयो व्यापारः ॥

---

तृतीयो व्यापारः ।

**अथ राजवर्णनम्—**

राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे
भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे ।
येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ १ ॥
(कस्यापि ।)

शत्रुनीरजदृशोऽनुघस्रमाख्यापदेन हरिसिंह नाम ते ।
मोहिता हरिहरीति चक्षते रूपशौर्यबलसंहितैर्गुणैः ॥ २ ॥
(भोगिसूनोर्वेणीदत्तस्य)

कृष्णं समरसतृष्णं दृष्टवतो विष्टरश्रवसः ।
राजन्यजन्ममूले भुजमूले पुलकमुकुलानि ॥ ३ ॥
क्षोणीकाम निजामशाह विलसत्सिन्दूरकुन्दस्रजि
स्रष्टा त्वच्चरणं विधाय निदधे वैरिश्रियो मूर्धनि ।
सीमन्तस्य चकास्ति कापि सरणिस्तस्योर्ध्वरेखादयः
सिन्दूरस्य कणा जयन्ति किरणाः कुन्दानि मन्ये नखाः ॥ ४ ॥
(एतौ भानुकरस्य)

अस्मद्वारिनिबद्धसिन्धुरघटाव्यालोलकर्णानिलैः
पीयन्तामरविन्दसुन्दरदृशां स्वेदाम्भसां बिन्दवः ॥ ३८ ॥
क्रीडामूलं दुकूलं दलितरिपुमहीपालवृन्दं गजेन्द्रं
दत्वा तुङ्गं तुरङ्गं विरचय वसुधानाथ तावद्विदायम् ।
युष्मत्सत्कारभाजं दिशि दिशि चकितैः प्रेक्ष्य मामक्षिपातै-
र्वक्षोजाभोगभूमौ विलुठतु पुलकश्रेणिरेणेक्षणानाम् ॥ ३९ ॥
(एतौ भानुकरस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट**कृतायां **पद्यरचना**यां द्वितीयो व्यापारः ॥

---

तृतीयो व्यापारः ।

**अथ राजवर्णनम्—**

राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे
भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे ।
येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ १ ॥
(कस्यापि ।)

शत्रुनीरजदृशोऽनुघस्रमाख्यापदेन हरिसिंह नाम ते ।
मोहिता हरिहरीति चक्षते रूपशौर्यबलसंहितैर्गुणैः ॥ २ ॥
(भोगिसूनोर्वेणीदत्तस्य)

कृष्णं समरसतृष्णं दृष्टवतो विष्टरश्रवसः ।
राजन्यजन्ममूले भुजमूले पुलकमुकुलानि ॥ ३ ॥
क्षोणीकाम निजामशाह विलसत्सिन्दूरकुन्दस्रजि
स्रष्टा त्वच्चरणं विधाय निदधे वैरिश्रियो मूर्धनि ।
सीमन्तस्य चकास्ति कापि सरणिस्तस्योर्ध्वरेखादयः
सिन्दूरस्य कणा जयन्ति किरणाः कुन्दानि मन्ये नखाः ॥ ४ ॥
(एतौ भानुकरस्य)

**अथ सौन्दर्यप्रधाना नृपस्तुतिः—**

गेहे गेहे सुभगसुदृशो रामभद्र क्षितीश
त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः ।
तस्मिन्नाकस्मिकमुपनते वल्लभे भीतिभाजः
पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ ५ ॥

(कस्यापि)

अयं कामो निजामो वा त्वया किमवधारितम् ।
इति दृष्टिरिव प्रष्टुं श्रुतिं श्रयति सुभ्रुवाम् ॥ ६ ॥

सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुव-
स्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते ।
त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं
तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः ॥ ७ ॥

अलसं वपुषि श्लथं दुकूले चपलं चेतसि धूसरं कपोले ।
चकितं नयने स्तने विलोलं तव नामश्रवणं तनूदरीणाम् ॥ ८ ॥

(एते भानुकरस्य)

**अथ धरित्रीपतियात्रा—**

चोली चोलीं न तु कलयते गुर्जरी जर्जराङ्गी
भूर्जाक्रान्ता विशति विपिनं मालवी सालवीथीम् ।
नो संगीतं रचयति मनागङ्ग वङ्गी कृशाङ्गी
नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥

(लक्ष्मणस्य)

जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा
दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु ।
संगम्य त्वत्प्रतापैस्तदनु किमुदधौ दोहदं देव तासां
प्राची प्रातः प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥ १० ॥

(रामचन्द्रस्य)

**अथ सौन्दर्यप्रधाना नृपस्तुतिः—**

गेहे गेहे सुभगसुदृशो रामभद्र क्षितीश
त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः ।
तस्मिन्नाकस्मिकमुपनते वल्लभे भीतिभाजः
पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ ५ ॥

(कस्यापि)

अयं कामो निजामो वा त्वया किमवधारितम् ।
इति दृष्टिरिव प्रष्टुं श्रुतिं श्रयति सुभ्रुवाम् ॥ ६ ॥

सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुव-
स्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते ।
त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं
तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः ॥ ७ ॥

अलसं वपुषि श्लथं दुकूले चपलं चेतसि धूसरं कपोले ।
चकितं नयने स्तने विलोलं तव नामश्रवणं तनूदरीणाम् ॥ ८ ॥

(एते भानुकरस्य)

**अथ धरित्रीपतियात्रा—**

चोली चोलीं न तु कलयते गुर्जरी जर्जराङ्गी
भूर्जाक्रान्ता विशति विपिनं मालवी सालवीथीम् ।
नो संगीतं रचयति मनागङ्ग वङ्गी कृशाङ्गी
नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥

(लक्ष्मणस्य)

जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा
दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु ।
संगम्य त्वत्प्रतापैस्तदनु किमुदधौ दोहृदं देव तासां
प्राची प्रातः प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥ १० ॥

(रामचन्द्रस्य)

देव त्वद्विजये तुरङ्गमखुरव्रातक्षतक्ष्मातला-
त्प्रोड्डीने रजसः परागपटले दिक्चक्रमाक्रामति ।
अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति
स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ ११ ॥
(महानाटकात्)

त्वद्याने वाजिराजिप्रखरखरपुटोद्धूतधूलीतमिस्रे
लुण्टाकेभ्यो भियेव स्फुटमुपनयते गोसहस्रं विवस्वान् ।
गोपायन्ति द्रुतं खं वलयमपि दिशो न क्षमापि क्षमाभू-
त्स्थातुं वा गन्तुमुर्वीतिलक वसुमती केवलं कम्पते स्म ॥ १२ ॥
(महाकाव्ये)

काञ्चीं काञ्ची न धत्ते कलयति न दृशा केरली केलितल्पं
सिन्दूरं दूर एव क्षिपति करतलन्यस्तमान्ध्री पुरन्ध्री ।
सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तयो रक्तिमानं
कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ॥ १३ ॥
(कस्यापि)

वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य मूर्छावतीं
भेरी भाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति ।
दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकै-
र्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥ १४ ॥
वेल्लत्पक्षतिराजहंसयुवतित्रुट्यन्मृणालावलि-
भ्राम्यत्षट्पदभूरिभाङ्कृति पतच्चक्रीकृतक्रेङ्कृति ।
पर्यस्यन्नवपद्मसंहतिपृथग्दिग्वर्तिवेगस्थिति-
प्रस्थानध्वजवातलोलमजनि स्वर्गापगायाः पयः ॥ १५ ॥
भेरीभाङ्कृतिभिस्तुरङ्गनिनदैः कुम्भीन्द्रकोलाहलैः
प्रस्थाने तव वीरभान[1] दलितं ब्रह्माण्डभाण्डोदरी ।

1. वीरभानाख्यो राजा.

देव त्वद्विजये तुरङ्गमखुरव्रातक्षतक्ष्मातला-
त्प्रोड्डीने रजसः परागपटले दिक्चक्रमाक्रामति।
अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति
स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः॥ ११॥
(महानाटकात्)

त्वद्याने वाजिराजिप्रखरखरपुटोद्धूतधूलीतमिस्रे
लुण्टाकेभ्यो भियेव स्फुटमुपनयते गोसहस्रं विवस्वान्।
गोपायन्ति द्रुतं स्वं वलयमपि दिशो न क्षमापि क्षमाभू-
त्स्थातुं वा गन्तुमुर्वीतिलक वसुमती केवलं कम्पते स्म॥ १२॥
(महाकाव्ये)

काञ्चीं काञ्ची न धत्ते कलयति न दृशा केरली केलितल्पं
सिन्दूरं दूर एव क्षिपति करतलन्यस्तमान्ध्री पुरन्ध्री।
सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तयो रक्तिमानं
कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे॥ १३॥
(कस्यापि)

वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य मूर्छावतीं
भेरी भाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति।
दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकै-
र्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति॥ १४॥
वेल्लत्पक्षतिराजहंसयुवतित्रुट्यन्मृणालावलि-
भ्राम्यत्षट्पदभूरिभाङ्कृति पतच्चक्रीकृतक्रेङ्कृति।
पर्यस्यन्नवपद्मसंहतिपृथग्दिग्वर्तिवेगस्थिति-
प्रस्थानध्वजवातलोलमजनि स्वर्गापगायाः पयः॥ १५॥
भेरीभाङ्कृतिभिस्तुरङ्गनिनदैः कुम्भीन्द्रकोलाहलैः
प्रस्थाने तव वीरभान[1] दलितं ब्रह्माण्डभाण्डोदरी।

1. वीरभानाख्यो राजा.

आधाय ज्वलति प्रतापदहने रङ्गैः पुनर्वेधसा
तारानायकतारकासुरसरिद्भ्राजादिवायोजितम् ॥ १६ ॥
(भानुकरस्यैते)

**अथ पताका—**

नृपतिनिजामचमूचरचरणार्पणबहलपीडाभिः।
रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥ १७ ॥

निजामवसुधाधिपे क्षिपति शोणकोणे दृशौ
रणाङ्गणसमुद्भटैः प्रतिभटैर्विभिन्नीकृतम्।
वपुर्विपुलवेपथु व्यथितमब्जिनीप्रेयसो
व्रणज्वरविशङ्कया किमु पताकया स्पृश्यते ॥ १८ ॥
(एतौ भानुकरस्य)

**अथ तुरङ्गः—**

वातं स्थावरयन्नभः पुटकयन्स्रोतस्विनीं सूत्रयन्
सिन्धुं पल्वलयन्वनं विटपयन्भूमण्डलं लोष्टयन्।
शैलं सर्षपयन्दिशं द्व्यणुकयँल्लोकत्रयं क्रोडयन्
हेलारब्धरयो हयस्तव कथंकारं गिरां गोचरः ॥ १९ ॥

मेखलीयति मेदिन्याः ककुभः कङ्कणीयति।
मण्डलीस्तुरगः कुर्वञ्जगतः कुण्डलीयति ॥ २० ॥
(भानुकरस्यैतौ)

धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन्।
धर्माराधनसंनियुक्तजगता राज्ञामुनाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥२१॥
(श्रीहर्षस्य)

अलक्षितगतागतैः कुलवधूकटाक्षैरिव
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव।

आधाय ज्वलति प्रतापदहने रङ्गैः पुनर्वेधसा
तारानायकतारकासुरसरिद्भ्राजादिवायोजितम् ॥ १६ ॥
(भानुकरस्यैते)

**अथ पताका—**

नृपतिनिजामचमूचरचरणार्पणबहलपीडाभिः ।
रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥ १७ ॥

निजामवसुधाधिपे क्षिपति शोणकोणे दृशौ
रणाङ्गणसमुद्भटैः प्रतिभटैर्विभिन्नीकृतम् ।
वपुर्विपुलवेपथु व्यथितमब्जिनीप्रेयसो
व्रणज्वरविशङ्कया किमु पताकया स्पृश्यते ॥ १८ ॥
(एतौ भानुकरस्य)

**अथ तुरङ्गः—**

वातं स्थावरयन्नभः पुटकयन्स्रोतस्विनीं सूत्रयन्
सिन्धुं पल्वलयन्वनं विटपयन्भूमण्डलं लोष्टयन् ।
शैलं सर्षपयन्दिशं द्व्यणुकयँल्लोकत्रयं क्रोडयन्
हेलारब्धरयो हयस्तव कथंकारं गिरां गोचरः ॥ १९ ॥

मेखलीयति मेदिन्याः ककुभः कङ्कणीयति ।
मण्डलीस्तुरगः कुर्वञ्जगतः कुण्डलीयति ॥ २० ॥
(भानुकरस्यैतौ)

धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन् ।
धर्माराधनसंनियुक्तजगता राज्ञामुनाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥२१॥
(श्रीहर्षस्य)

अलक्षितगतागतैः कुलवधूकटाक्षैरिव
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव ।

सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥ २२ ॥
(कस्यापि)

निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे ।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ २३ ॥
(त्रिविक्रमस्य)

**अथ कृपाणः—**

भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधर-
स्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन्धारया ।
व्युद्धक्रुद्धविरुद्धसिन्धुरदलद्गण्डस्थलप्रस्खल-
न्मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ॥ २४ ॥
(गणपतेः)

वीर त्वत्खड्गधारानिहतरिपुगणास्तं हिमांशुं विभिद्य
स्वर्गे यान्ति स्म नूनं विगलितकलुषाः साधुवत्पुण्यलभ्ये ।
यस्मिन्संलक्ष्यते वै विकटमलपदे नावभेदोऽधुनापि
मध्याभ्यालक्ष्यदेवस्तुतिततविषयो देव भूबिम्बभानो ॥ २५ ॥
(भोगिसूनोर्वेणीदत्तस्य)

क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजङ्गेश्वरं
जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत् ।
यद्भिन्नेभकपोललोलविगलन्मुक्ताकलापच्छला-
दच्छामण्डपरम्परामधिरणं सूते स्फुरन्ती मुहुः ॥ २६ ॥
(भानुकरस्य)

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीची
तेजोग्नेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली ।

सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥ २२ ॥
(कस्यापि)

निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ २३ ॥
(त्रिविक्रमस्य)

**अथ कृपाणः—**

भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधर-
स्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन्धारया।
व्युद्धक्रुद्धविरुद्धसिन्धुरदलद्दण्डस्थलप्रस्खल-
न्मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ॥ २४ ॥
(गणपतेः)

वीर त्वत्खड्गधारानिहतरिपुगणास्तं हिमांशुं विभिद्य
स्वर्गे यान्ति स्म नूनं विगलितकलुषाः साधुवत्पुण्यलभ्ये।
यस्मिन्संलक्ष्यते वै विकटमलपदे नावभेदोऽधुनापि
मध्याभ्यालक्ष्यदेवस्तुतिततविषयो देव भूबिम्बभानो ॥ २५ ॥
(भोगिसूनोर्वेणीदत्तस्य)

क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजङ्गेश्वरं
जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत्।
यद्भिन्नेभकपोललोलविगलन्मुक्ताकलापच्छला-
दच्छामण्डपरम्परामधिरणं सूते स्फुरन्ती मुहुः ॥ २६ ॥
(भानुकरस्य)

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीची
तेजोग्नेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली।

वीरश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्ली
वेल्लत्यम्भोधरश्रीरकबर धरणीपालपाणौ कृपाणः ॥ २७ ॥
(अकबरीयकालिदासस्य)

**अथ वीरवाक्यम्—**

अद्यारभ्य कठोरकार्मुकलताविन्यस्तहस्ताम्बुज-
स्तावन्न प्रकटीकरोमि नयने शोणे निमेषोदयान् ।
यावत्सायककोटिपाटितरिपुक्ष्मापालमौलिस्खल-
न्मल्लीमाल्यपतत्परागपटलैरामोदिनी मेदिनी ॥ २८ ॥

नो तावत्कलयामि केलिकृपणे वामभ्रुवो लोचने
तावन्न प्रणयावलीढमनसः पश्यामि मातुर्मुखम् ।
यावत्तारकुठारपातनिपतत्प्रत्यर्थिपृथ्वीपति-
भ्राम्यत्स्वर्णकिरीटबद्धशिरसो भ्राम्यन्ति नो फेरवः ॥ २९ ॥

राकातारापतिरुचिचमत्कारवाचालकीर्ति-
र्वेलाहेलापरिणतगजस्पर्धिदोर्वल्लिवीर्यः ।
एकच्छत्रं भुवनवलयं मेदिनीमेकवीरां
युद्धारम्भे स्मितपरिचितः कौतुकादद्य कुर्याम् ॥ ३० ॥

समरविहरदस्मद्भल्लनिष्पातभिन्न-
प्रतिनरपतिभिन्नाद्भास्वतो बिम्बमध्यात् ।
वयमहह धरायां पातयामः पताका-
वसनपवनलोलं वारि दिव्यापगायाः ॥ ३१ ॥

निष्पीते कलशोद्भवेन जलधौ गौरीपतेर्गङ्गया
होतुं हन्त ललाटदावदहने यावत्कृतः प्रक्रमः ।
तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुह-
द्वन्द्वप्रस्खलदस्रवारिपटलैः सृष्टाः पयोराशयः ॥ ३२ ॥
(भानुकरस्य)

वीरश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्ली
वेल्लत्यम्भोधरश्रीरकबर धरणीपालपाणौ कृपाणः ॥ २७ ॥
(अकबरीयकालिदासस्य)

**अथ वीरवाक्यम्—**

अद्यारभ्य कठोरकार्मुकलताविन्यस्तहस्ताम्बुज-
स्तावन्न प्रकटीकरोमि नयने शोणे निमेषोदयान् ।
यावत्सायककोटिपाटितरिपुक्ष्मापालमौलिस्खल-
न्मल्लीमाल्यपतत्परागपटलैरामोदिनी मेदिनी ॥ २८ ॥

नो तावत्कलयामि केलिकृपणे वामभ्रुवो लोचने
तावन्न प्रणयावलीढमनसः पश्यामि मातुर्मुखम् ।
यावत्तारकुठारपातनिपतत्प्रत्यर्थिपृथ्वीपति-
भ्राम्यत्स्वर्णकिरीटबद्धशिरसो भ्राम्यन्ति नो फेरवः ॥ २९ ॥

राकातारापतिरुचिचमत्कारवाचालकीर्ति-
र्वेलाहेलापरिणतगजस्पर्धिदोर्वल्लिवीर्यः ।
एकच्छत्रं भुवनवलयं मेदिनीमेकवीरां
युद्धारम्भे स्मितपरिचितः कौतुकादद्य कुर्याम् ॥ ३० ॥

समरविहरदस्मद्भल्लनिष्पातभिन्न-
प्रतिनरपतिभिन्नाद्भास्वतो बिम्बमध्यात् ।
वयमहह धरायां पातयामः पताका-
वसनपवनलोलं वारि दिव्यापगायाः ॥ ३१ ॥

निष्पीते कलशोद्भवेन जलधौ गौरीपतेर्गङ्गया
होतुं हन्त ललाटदावदहने यावत्कृतः प्रक्रमः ।
तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुह-
द्वन्द्वप्रस्खलदस्रवारिपटलैः सृष्टाः पयोराशयः ॥ ३२ ॥
(भानुकरस्य)

**अथ रणः—**

कृपाणकिरणानलं रुधिरनीरपूरच्छटा-
जटालतलसंकुलं भटतिमिङ्गिलैराकुलम् ।
प्रमथ्य समरार्णवं चरमकर्षि लक्ष्मीस्त्वया
विधारमदमन्थरं मथनमन्दरं सिन्धुरम् ॥ ३३ ॥

(लक्ष्मणस्य)

भल्लैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदारा-
ञ्श्रुत्वा राजन्पुनरपि भुजादण्डकण्डूतिभाजः ।
आलिङ्गन्त्यास्त्रिदशसुदृशो भ्रूलतां वीक्ष्य भुग्नां
चापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥ ३४ ॥

मिलितमिहिरभासं मौलिमेतस्य दृष्ट्वा
परवरतनुपादालक्तकं तर्कयन्त्या ।
त्वदरिधरणिजानिर्भानुबिम्बेन गच्छ-
न्सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥ ३५ ॥

(भानुकरस्यैतौ)

कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तु विद्वेषिणां
त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते ।
वीरत्वं तु जयस्य मित्रमनिशं ते यान्ति वैकुण्ठतां
संग्रामे तव भूपते महदिदं चित्रं समालक्ष्यते ॥ ३६ ॥

(धरणीधरस्य)

को दण्डं न ददाति देव भवते कोदण्डमातन्वते
को नारातिमुपैति पारमुदधेः कोणारुणे लोचने ।
का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते
राजन्गर्जति वारणे तव पुनः को वा रणे वर्तते ॥ ३७ ॥

(कस्यापि)

**अथ रणः—**

कृपाणकिरणानलं रुधिरनीरपूरच्छटा-
जटालतलसंकुलं भटतिमिङ्गिलैराकुलम् ।
प्रमथ्य समरार्णवं चरमकर्षि लक्ष्मीस्त्वया
विधारमदमन्थरं मथनमन्दरं सिन्धुरम् ॥ ३३ ॥

(लक्ष्मणस्य)

भल्लैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदारा-
ञ्श्रुत्वा राजन्पुनरपि भुजादण्डकण्डूतिभाजः ।
आलिङ्गन्त्यास्त्रिदशसुदृशो भ्रूलतां वीक्ष्य भुग्नां
चापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥ ३४ ॥

मिलितमिहिरभासं मौलिमेतस्य दृष्ट्वा
परवरतनुपादालक्तकं तर्कयन्त्या ।
त्वदरिधरणिजानिर्भानुबिम्बेन गच्छ-
न्सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥ ३५ ॥

(भानुकरस्यैतौ)

कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तु विद्वेषिणां
त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते ।
वीरत्वं तु जयस्य मित्रमनिशं ते यान्ति वैकुण्ठतां
संग्रामे तव भूपते महदिदं चित्रं समालक्ष्यते ॥ ३६ ॥

(धरणीधरस्य)

को दण्डं न ददाति देव भवते कोदण्डमातन्वते
को नारातिमुपैति पारमुदधेः कोणारुणे लोचने ।
का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते
राजन्गर्जति वारणे तव पुनः को वा रणे वर्तते ॥ ३७ ॥

(कस्यापि)

संमूर्छितं संयुगसंप्रहारैः पश्यन्ति सुप्तप्रतिबुद्धकल्कम् ।
आत्मानमङ्केषु सुराङ्गनानां मन्दाकिनीमारुतवीजिताङ्गम् ॥ ३८॥
(वराहमिहिरस्य ?)

करवारिरुहेण संधुनाने तरवारिं नृपतौ मुकुन्ददेवे ।
रचयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥ ३९ ॥
(गौडस्य)

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ४० ॥
(कालिदासस्य)

ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लग्नाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥ ४१ ॥
(व्यासस्य)

**अथ रणभग्नेऽपदशा—**

क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् ।
तेन पृष्ठे न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ ४२ ॥
(श्रीव्यासस्य)

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ ४३ ॥
(वेणीसंहारे)

**अथ रणक्षितिः—**

भवत्तुरगनिष्ठुरक्षुरदृढव्रणैराचिता
क्षणात्समरविच्युतप्रतिनृपालवेलाञ्चिता ।
इयं रणधरा भवद्द्विरददानधाराजलैः
किमु व्रणतलेऽर्पितं वसनपट्टमासिञ्चति ॥ ४४ ॥

संमूर्छितं संयुगसंप्रहारैः पश्यन्ति सुप्तप्रतिबुद्धकल्कम् ।
आत्मानमङ्केषु सुराङ्गनानां मन्दाकिनीमारुतवीजिताङ्गम् ॥ ३८॥

(वराहमिहिरस्य ?)

करवारिरुहेण संधुनाने तरवारिं नृपतौ मुकुन्ददेवे ।
रचयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥ ३९ ॥

(गौडस्य)

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ४० ॥

(कालिदासस्य)

ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लग्नाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥ ४१ ॥

(व्यासस्य)

**अथ रणभग्नेऽपदशा—**

क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् ।
तेन पृष्ठे न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ ४२ ॥

(श्रीव्यासस्य)

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ ४३ ॥

(वेणीसंहारे)

**अथ रणक्षितिः—**

भवत्तुरगनिष्ठुरक्षुरदृढव्रणैराचिता
क्षणात्समरविच्युतप्रतिनृपालवेलाञ्चिता ।
इयं रणधरा भवद्द्विरददानधाराजलैः
किमु व्रणतलेऽर्पितं वसनपट्टमासिञ्चति ॥ ४४ ॥

युष्मद्दोर्दण्डमण्डल्यवनमितरणच्चण्डकोदण्डदण्डो-
न्मुक्तेषु च्छिन्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा ।
गायन्नृत्यत्प्रवेल्लद्रजनिचरवधूदत्ततालैः करालै-
र्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ ४५ ॥
(एतौ लक्ष्मणस्य)

रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ।
क्रीडत्यव्रीडमस्मिन्रुधिरमधुवशात्पूतनानूतनाङ्गी
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ ४६ ॥
(कस्यापि)

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥ ४७ ॥
(वेणीसंहारे)

स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्त-
र्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरणत्कौणपाट्टाट्टहासाः ।
श्रीभोज त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्य-
द्गृध्रौघत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्द्राक् ॥ ४८ ॥
(देवेश्वरस्य)

**अथारिपलायनम्—**

तादृग्दण्डविवर्तनर्तितमहीचक्रादपाक्रामिताः
क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखाक्रमम् ।
यस्य प्रौढतरप्रतापदहनज्वालाभिरन्ते दिशा-
मापाके निपतन्ति पार्थिवभटाः शीर्यन्ति जीर्यन्ति च ॥ ४९ ॥

त्वदरिनृपतिमाशावाससंधूलिधारा-
धवलमहह भिक्षुं वीक्ष्य भर्गभ्रमेण ।

युष्मद्दोर्दण्डमण्डल्यवनमितरणच्चण्डकोदण्डदण्डो-
न्मुक्तेषु च्छिन्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा ।
गायन्नृत्यत्प्रवेल्लद्रजनिचरवधूदत्ततालैः करालै-
र्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ ४५ ॥
(एतौ लक्ष्मणस्य)

रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ।
क्रीडत्यव्रीडमस्मिन्रुधिरमधुवशात्पूतनानूतनाङ्गी
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ ४६ ॥
(कस्यापि)

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥ ४७ ॥
(वेणीसंहारे)

स्पृष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्त-
र्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरणत्कौणपाट्टाट्टहासाः ।
श्रीभोज त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्य-
द्गृध्रौघत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्राक् ॥ ४८ ॥
(देवेश्वरस्य)

**अथारिपलायनम्—**

तादृग्दण्डविवर्तनर्तितमहीचक्रादपाक्रामिताः
क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखाक्रमम् ।
यस्य प्रौढतरप्रतापदहनज्वालाभिरन्ते दिशा-
मापाके निपतन्ति पार्थिवभटाः शीर्यन्ति जीर्यन्ति च ॥ ४९ ॥

त्वदरिनृपतिमाशावाससंधूलिधारा-
धवलमहह भिक्षुं वीक्ष्य भर्गभ्रमेण ।

सुरभिरुदधिवेलाकाननं गाहमानो
दिशति कुसुमबाणं दूरतो निर्गमाय ॥ ५० ॥
(भानुकरस्यैतौ)

नालिङ्गन्ति पयोधरौ भवदिभप्रोत्तुङ्गकुम्भस्थल-
भ्रान्त्या वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात् ।
भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते
वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डल ॥ ५१ ॥
(कस्यापि)

क्षणं कान्तारागप्रसरविलसन्मानसरुचिः
क्षणं शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदयः ।
क्षणं पत्रध्वानश्रुतिपुलकितो यद्भयभरा-
द्वसन्प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव ॥ ५२ ॥
(वैद्यभानोः)

राजन् द्विषस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥ ५३ ॥
(कस्यापि)

द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिशिखैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् कर्ण चिरंतनप्रणयिनी शून्येऽपि सैव स्थितिः ॥ ५४ ॥
(कस्यापि)

**अथारिनारी—**
समस्तावनीनाथमौले भवत्तः परास्तद्विषः पद्मविस्तारिनेत्रा ।
नितान्तं विहस्ता स्वहस्तारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥ ५५ ॥
स्फुटतरमटवीनां प्रान्तरे पर्यटन्ती
हरिहतगजकुम्भोन्मुक्तमुक्ताफलानि ॥

---

१. कान्तागार इत्यपरः पाठः. २. रतिः इति पाठान्तरम्.

सुरभिरुदधिवेलाकाननं गाहमानो
दिशति कुसुमबाणं दूरतो निर्गमाय ॥ ५० ॥
(भानुकरस्यैतौ)

नालिङ्गन्ति पयोधरौ भवदिभप्रोत्तुङ्गकुम्भस्थल-
भ्रान्त्या वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात् ।
भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते
वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डल ॥ ५१ ॥
(कस्यापि)

क्षणं कान्तारागप्रसरविलसन्मानसरुचिः
क्षणं शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदयः ।
क्षणं पत्रध्वानश्रुतिपुलकितो यद्भयभरा-
द्वसन्प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव ॥ ५२ ॥
(वैद्यभानोः)

राजन् द्विषस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥ ५३ ॥
(कस्यापि)

द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिशिखैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् कर्ण चिरंतनप्रणयिनी शून्येऽपि सैव स्थितिः ॥ ५४ ॥
(कस्यापि)

**अथारिनारी—**
समस्तावनीनाथमौले भवत्तः परास्तद्विषः पद्मविस्तारिनेत्रा ।
नितान्तं विहस्ता स्वहस्तारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥ ५५ ॥
स्फुटतरमटवीनां प्रान्तरे पर्यटन्ती
हरिहतगजकुम्भोन्मुक्तमुक्ताफलानि ॥

१. कान्तागार इत्यपरः पाठः. २. रतिः इति पाठान्तरम्.

परिकल(र)यति हस्ताम्भोजशोणप्रभाभिः
परिहरति च दूरान्मञ्जुगुञ्जाभ्रमेण ॥ ५६ ॥

क्षोणीपाल त्वदरिहरिणीलोचना शोचमाना
गुञ्जाहारं कुचकलशयोर्निःश्वसन्ती करोति ।
क्षुब्धक्षीराम्बुधिलहरिसंशोभिर्युष्मद्यशोभि-
र्गौरं मुक्ताफलमयमिवाविन्दते नन्दते च ॥ ५७ ॥
(लक्ष्मणस्यैते)

धीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः ।
उरोजे पतिता रेजुः सरोजे मधुपा इव ॥ ५८ ॥
(कस्यापि)

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् ।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशा-
दपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ ५९ ॥
(कस्यापि)

कुरुवक कुचाघातक्रीडासुखेन वियुज्यसे
बकुलविटपिन् स्मर्तव्यं ते मुखासवसेचनम् ।
चरणघटनाबन्धो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥ ६० ॥
(रत्नाकरस्य)

घ्रातं तालफलाशया स्तनतटं बिम्बभ्रमेणाधरो
दष्टः पाकविदीर्णदाडिमधियालीढाः स्फुरन्तो रदाः ।
भ्राम्यन्ती भ्रमनिस्पृहानुविपिनं त्वद्वैरिसीमन्तिनी
निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगैः ॥ ६१ ॥
(कस्यापि)

१. संक्षोभिभिस्त्वद्यशोभिरिति पाठान्तरम्.

परिकल(र)यति हस्ताम्भोजशोणप्रभाभिः
परिहरति च दूरान्मञ्जुगुञ्जाभ्रमेण ॥ ५६ ॥

क्षोणीपाल त्वदरिहरिणीलोचना शोचमाना
गुञ्जाहारं कुचकलशयोर्निःश्वसन्ती करोति ।
क्षुब्धक्षीराम्बुधिलहरिसंशोभि[1]र्युष्मद्यशोभि-
र्गौरं मुक्ताफलमयमिवाविन्दते नन्दते च ॥ ५७ ॥

(लक्ष्मणस्यैते)

धीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः ।
उरोजे पतिता रेजुः सरोजे मधुपा इव ॥ ५८ ॥

(कस्यापि)

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् ।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशा-
दपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥ ५९ ॥

(कस्यापि)

कुरुवक कुचाघातक्रीडासुखेन वियुज्यसे
बकुलविटपिन् स्मर्तव्यं ते मुखासवसेचनम् ।
चरणघटनाबन्धो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥ ६० ॥

(रत्नाकरस्य)

घ्रातं तालफलाशया स्तनतटं बिम्बभ्रमेणाधरो
दष्टः पाकविदीर्णदाडिमधियालीढाः स्फुरन्तो रदाः ।
भ्राम्यन्ती भ्रमनिस्पृहानुविपिनं त्वद्वैरिसीमन्तिनी
निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगैः ॥ ६१ ॥

(कस्यापि)

---

१. संक्षोभिभिस्त्वद्यशोभिरिति पाठान्तरम्.

इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥ ६२ ॥

(श्रीहर्षस्य)

प्रस्थानं रतिमन्दिरात्कमलिनीबन्धोरपि प्रेक्षणं
काकुः केलिविधिं विनापि चरणन्यासः पृथिव्यामपि ।
किं च क्लान्तमतालवृन्तपवनः प्रत्यङ्गमालिङ्गति
द्रष्टव्यं किमतोऽपि कृष्णनृपतेः प्रत्यर्थिवामभ्रुवाम् ॥ ६३ ॥
स्वप्नेन क्षितिपावतंस भवतो भीत्या व्रजन्ती वनं
निर्मग्ना प्रतिपक्षराजरमणी कल्लोलिनीपाथसि ।
उत्क्षिप्ताननमुन्नतभ्रु चरणव्यासक्तमुक्तालतं
भूयः स्फारितबाहुवल्लि शयनादुद्भ्रान्तमुत्तिष्ठति ॥ ६४ ॥
मौलिं मानविधिं विना नमयितुं हारं स्वयं गुम्फितुं
निर्यातुं दयितस्य पाणिकमलच्छायां विना वर्त्मनि ।
निद्रातुं च विनाङ्कपालिशयनं द्रष्टुं च शून्या दिशः
सख्या त्वत्प्रतिवीरनीरजमुखी साकूतमध्याप्यते ॥ ६५ ॥
अये मातस्तातः क्व गत इति यद्वैरिशिशुना
दरीगेहे लीना निभृतमिह पृष्टा स्वजननी ।
करेणास्यं तस्य द्रुतमथ निरुद्ध्याश्रुभृतया
विनिःश्वस्य स्फारं शिव शिव दृशैवोत्तरयति ॥ ६६ ॥

(भानुकरस्यैते)

अथारिदम्पती—

अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा
जटालो दिग्वासाः शिखरिणि शिवोऽयं निवसति ।
इति भ्रान्त्यान्योन्यं क्षणमिलितयोः क्षोणितिलक
द्विषद्दम्पत्योस्ते शिव शिव भवन्ति प्रणतयः ॥ ६७ ॥

(कस्यापि)

---

१. शीतद्विष इति पाठान्तरम्.

इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥ ६२ ॥

(श्रीहर्षस्य)

प्रस्थानं रतिमन्दिरात्कमलिनीबन्धोरपि प्रेक्षणं
काकुः केलिविधिं विनापि चरणन्यासः पृथिव्यामपि ।
किं च क्लान्तमतालवृन्तपवनः प्रत्यङ्गमालिङ्गति
द्रष्टव्यं किमतोऽपि कृष्णनृपतेः प्रत्यर्थिवामभ्रुवाम् ॥ ६३ ॥

स्वप्नेन क्षितिपावतंस भवतो भीत्या व्रजन्ती वनं
निर्मग्ना प्रतिपक्षराजरमणी कल्लोलिनीपाथसि ।
उत्क्षिप्ताननमुन्नतभ्रु चरणव्यासक्तमुक्तालतं
भूयः स्फारितबाहुवल्लि शयनादुद्भ्रान्तमुत्तिष्ठति ॥ ६४ ॥

मौलिं मानविधिं विना नमयितुं हारं स्वयं गुम्फितुं
निर्यातुं दयितस्य पाणिकमलच्छायां विना वर्त्मनि ।
निद्रातुं च विनाङ्कपालिशयनं द्रष्टुं च शून्या दिशः
सख्या त्वत्प्रतिवीरनीरजमुखी साकूतमध्याप्यते ॥ ६५ ॥

अये मातस्तातः क्व गत इति यद्वैरिशिशुना
दरीगेहे लीना निभृतमिह पृष्टा स्वजननी ।
करेणास्यं तस्य द्रुतमथ निरुद्ध्याश्रुभृतया
विनिःश्वस्य स्फारं शिव शिव दृशैवोत्तरयति ॥ ६६ ॥

(भानुकरस्यैते)

**अथारिदम्पती—**

अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा
जटालो दिग्वासाः शिखरिणि शिवोऽयं निवसति ।
इति भ्रान्त्यान्योन्यं क्षणमिलितयोः क्षोणितिलक
द्विषद्दम्पत्योस्ते शिव शिव भवन्ति प्रणतयः ॥ ६७ ॥

(कस्यापि)

---

१. शीतद्विष इति पाठान्तरम्.

अथारिनगरम्—

अलसभुजलताभिर्नोदितो नागरीभि-
र्भवनदमनकानां नातिथिर्वा बभूव ।
त्वदरिनगरमध्ये संचरंश्चैत्रजन्मा
जरदजगरपीतः क्षीयते गन्धवाहः ॥ ६८ ॥

त्वदरिनृपतिकेलीसौधसंरूढदूर्वा-
ङ्कुरकवलनलोलं वीक्ष्य रङ्कुं सुधांशोः ।
उपवनहरिणीनामुन्नतभ्रूलतानां
प्रसरति रतिजानिग्लानिजन्मा विवर्तः ॥ ६९ ॥

त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य ।
कौणपकपिमण्डलयोः शिव शिव भूयो भवन्ति संरम्भाः ७०

(भानुकरस्यैते)

अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतर-
द्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् ।
इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ ७१ ॥

(कस्यापि)

त्वद्वैरिणो दूरपलायितस्य प्रकाशयन्नक्तमरण्यमार्गम् ।
कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो निजमन्दिरेषु ॥ ७२ ॥

(कस्यापि)

स्नाताः प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्वा निवापाञ्जलीन् ।
प्रासादास्तव विद्विषां परिपतत्कुड्यस्थिपिण्डच्छला-
त्कुर्वन्ति प्रतिवासरं निजपतिप्रेतेषु पिण्डक्रियाम् ॥ ७३ ॥

(हनूमतः)

हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दृष्ट्वा प्रतिगज इव त्वद्विषां मन्दिरेषु ।

**अथारिनगरम्—**

अलसभुजलताभिर्नादृतो नागरीभि-
र्भवनदमनकानां नातिथिर्वा बभूव ।
त्वदरिनगरमध्ये संचरंश्चैत्रजन्मा
जरदजगरपीतः क्षीयते गन्धवाहः ॥ ६८ ॥

त्वदरिनृपतिकेलीसौधसंरूढदूर्वा-
ङ्कुरकवलनलोलं वीक्ष्य रङ्कुं सुधांशोः ।
उपवनहरिणीनामुन्नतभ्रूलतानां
प्रसरति रतिजानिग्लानिजन्मा विवर्तः ॥ ६९ ॥

त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य ।
कौणपकपिमण्डलयोः शिव शिव भूयो भवन्ति संरम्भाः ७०

(भानुकरस्यैते)

अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतर-
द्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् ।
इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ ७१ ॥

(कस्यापि)

त्वद्वैरिणो दूरपलायितस्य प्रकाशयन्नक्तमरण्यमार्गम् ।
कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो निजमन्दिरेषु ॥ ७२ ॥

(कस्यापि)

स्नाताः प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्वा निवापाञ्जलीन् ।
प्रासादास्तव विद्विषां परिपतत्कुड्यस्थिपिण्डच्छला-
त्कुर्वन्ति प्रतिवासरं निजपतिप्रेतेषु पिण्डक्रियाम् ॥ ७३ ॥

(हनूमतः)

हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दृष्ट्वा प्रतिगज इव त्वद्विषां मन्दिरेषु ।

दन्ताघाताद्दलितदशनस्तं पुनर्वीक्ष्य सद्यो
मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥ ७४ ॥
(कस्यापि)

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां **पद्यरचनायां** तृतीयो व्यापारः ॥

चतुर्थो व्यापारः ।

**अथ शृङ्गारः—**

अथ शृङ्गारभृङ्गारसंभृताः पद्यरूपिणीः ।
व्यक्तीकुर्वे सुधाः सर्वे बुधाः संशीलयन्तु ताः ॥ १ ॥

**अथ कामप्रभावः—**

प्रतप्तायःपिण्डाविव किमपि संताप्य विशिखै-
र्यथा कल्पान्तेऽपि प्रविघटत एतौ नहि पुनः ।
तथा तौ देहौ यः सपदि शिवयोः संघटितवा-
नमुष्मै कामाय प्रतिनमत वामाय विबुधाः ॥ २ ॥
(लक्ष्मणस्य)

**अथ बालावर्णनम्—**

किं कौमुदीः शशिकलाः सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुङ्कृतिदग्धमूर्तेः
संजीवनौषधिरियं विहिता विधात्रा ॥ ३ ॥

एकान्तसुन्दरविधानजडः क्व धाता
सर्वाङ्गकान्तिमधुरं क्व च रूपमस्याः ।
मन्ये महेश्वरभयान्मकरध्वजेन
प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ ४ ॥
(कस्याप्येतौ)

अदम्भा हि रम्भा विलक्षा च लक्ष्मीर्घृताची ह्रिया चीरसंछादितास्या ।
अहो जायते मन्दवर्णाप्यपर्णा समाकर्ण्य तस्या गुणस्यैकदेशम् ॥ ५ ॥
(गदाधरस्य)

दन्ताघाताद्दलितदशनस्तं पुनर्वीक्ष्य सद्यो
मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥ ७४ ॥
(कस्यापि)

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां **पद्यरचनायां** तृतीयो व्यापारः ॥

चतुर्थो व्यापारः ।

**अथ शृङ्गारः—**

अथ शृङ्गारभृङ्गारसंभृताः पद्यरूपिणीः ।
व्यक्तीकुर्वे सुधाः सर्वे बुधाः संशीलयन्तु ताः ॥ १ ॥

**अथ कामप्रभावः—**

प्रतप्तायःपिण्डाविव किमपि संताप्य विशिखै-
र्यथा कल्पान्तेऽपि प्रविघटत एतौ नहि पुनः ।
तथा तौ देहौ यः सपदि शिवयोः संघटितवा-
नमुष्मै कामाय प्रतिनमत वामाय विबुधाः ॥ २ ॥
(लक्ष्मणस्य)

**अथ बालावर्णनम्—**

किं कौमुदीः शशिकलाः सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुङ्कृतिदग्धमूर्तेः
संजीवनौषधिरियं विहिता विधात्रा ॥ ३ ॥
एकान्तसुन्दरविधानजडः क्व धाता
सर्वाङ्गकान्तिमधुरं क्व च रूपमस्याः ।
मन्ये महेश्वरभयान्मकरध्वजेन
प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ ४ ॥
(कस्याप्येतौ)

अदम्भा हि रम्भा विलक्षा च लक्ष्मीर्घृताची ह्रिया चीरसंछादितास्या ।
अहो जायते मन्दवर्णाप्यपर्णा समाकर्ण्य तस्या गुणस्यैकदेशम् ॥ ५ ॥
(गदाधरस्य)

अथ वयःसन्धिः—

(सदृश्य)मानवदनस्मितलेशमीष-
न्मन्दायमानगतिरीतिपदारविन्दम् ।
अभ्यस्यमाननवविभ्रमशोभमेत-
दाहूयमानयुवमानससङ्गमस्याः ॥ ६ ॥

समुन्नमदुरःस्थलप्रसरमीषदालक्षित-
क्षणक्षणविलक्षणप्रचलदीक्षणावेक्षणम् ।
समुल्लसितविभ्रमादरदरभ्रमद्भ्रूलतं
किमाचरितुमीहते वरतनोर्न जाने वयः ॥ ७ ॥

(लक्ष्मणस्यैतौ)

तव कुवलयाक्षि वक्षसि कुण्डलिता कापि काञ्चनी कान्तिः ।
कुसुमेषोर्विजिगीषोर्भवति भुजे भूयसी कण्डूः ॥ ८ ॥

रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशला-
दालीभिः सरलीकृतापि कुटिलीभावं समालम्बते ।
लक्ष्या वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नति-
र्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥ ९ ॥

(भानुकरस्यैतौ)

न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः
कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती ।
सुधायाः सध्रीची न च वचनवीची परिचिता
तथापि श्रीरस्या युवजननमस्या विजयते ॥ १० ॥

न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी
विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः ।
तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवात्र संलक्ष्यते ॥ ११ ॥

(जयदेवस्य)

अथ वयःसन्धिः—

(सदृश्य)मानवदनस्मितलेशमीष-
न्मन्दायमानगतिरीतिपदारविन्दम् ।
अभ्यस्यमाननवविभ्रमशोभमेत-
दाहूयमानयुवमानससङ्गमस्याः ॥ ६ ॥

समुन्नमदुरःस्थलप्रसरमीषदालक्षित-
क्षणक्षणविलक्षणप्रचलदीक्षणावेक्षणम् ।
समुल्लसितविभ्रमादरदरभ्रमद्भ्रूलतं
किमाचरितुमीहते वरतनोर्न जाने वयः ॥ ७ ॥

(लक्ष्मणस्यैतौ)

तव कुवलयाक्षि वक्षसि कुण्डलिता कापि काञ्चनी कान्तिः ।
कुसुमेषोर्विजिगीषोर्भवति भुजे भूयसी कण्डूः ॥ ८ ॥

रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशला-
दालीभिः सरलीकृतापि कुटिलीभावं समालम्बते ।
लक्ष्या वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नति-
र्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥ ९ ॥

(भानुकरस्यैतौ)

न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः
कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती ।
सुधायाः सध्रीची न च वचनवीची परिचिता
तथापि श्रीरस्या युवजननमस्या विजयते ॥ १० ॥

न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी
विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः ।
तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवात्र संलक्ष्यते ॥ ११ ॥

(जयदेवस्य)

अचलं चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः ।
अतदिव तदपि शरीरं संप्रति वामभ्रुवो जयति ॥ १२ ॥
(कस्यापि)

**अथ तारुण्यम् ।**

उदयति तरुणिमतरणौ शैशवशशिनि प्रशान्तिमायाते ।
कुचचक्रवाकयुगलं तरुणितटिन्यां मिथो मिलति ॥ १३ ॥
(कस्यचित्)

परिहरति वयो यथा यथास्याः स्फुरदुरुकन्दुकशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥ १४॥
(त्रिविक्रमस्य)

प्रातःस्मेरसरोरुहामयमुपाध्यायो दृशोर्विभ्रमः
पाणिः कोकिलवाणि पल्लवसहाध्यायी समुन्मीलति ।
सन्दर्भो वचसां पचेलिमसुधासिद्धान्तवैतण्डिको
जानीमः कुसुमायुधस्य भगवान् भाग्यालये भार्गवः ॥ १५ ॥
वाणी कार्तिकरोहिणीपतिवलत्पीपूषकल्लोलिनी
धत्ते दृष्टिरकालकुन्दकलिकालावण्यलीलायितम् ।
नो जाने गमयिष्यतस्तव चिरादङ्के दिनं केलिभिः
कस्य श्रीफलपीवरस्तनि भवेदेकादशस्थो गुरुः ॥ १६ ॥
(भानुकरस्यैतौ)

उदञ्चद्वक्षोजद्वयतटभरक्षोभितकटि-
स्फुरद्दृग्भ्यां मन्दीकृतविलसदिन्दीवरयुगम् ।
समुद्यद्भ्रूभङ्गप्रविहितधनुर्भङ्गमनिशं
वयस्तत्पद्माक्ष्याः कथमिव मनो न व्यथयतु ॥ १७ ॥
(लक्ष्मणस्य)

**अथ बालावयववर्णनम्—**

**तत्र केशपाशः—**

आभाति शोभातिशयप्रपञ्चादेणीदृशोऽस्या रमणीयशोभा ।

अचलं चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः ।
अतदिव तदपि शरीरं संप्रति वामभ्रुवो जयति ॥ १२ ॥
(कस्यापि)

**अथ तारुण्यम् ।**

उदयति तरुणिमतरणौ शैशवशशिनि प्रशान्तिमायाते ।
कुचचक्रवाकयुगलं तरुणितटिन्यां मिथो मिलति ॥ १३ ॥
(कस्यचित्)

परिहरति वयो यथा यथास्याः स्फुरदुरुकन्दुकशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥ १४॥
(त्रिविक्रमस्य)

प्रातःस्मेरसरोरुहामयमुपाध्यायो दृशोर्विभ्रमः
पाणिः कोकिलवाणि पल्लवसहाध्यायी समुन्मीलति ।
सन्दर्भो वचसां पचेलिमसुधासिद्धान्तवैतण्डिको
जानीमः कुसुमायुधस्य भगवान् भाग्यालये भार्गवः ॥ १५ ॥
वाणी कार्तिकरोहिणीपतिवलत्पीयूषकल्लोलिनी
धत्ते दृष्टिरकालकुन्दकलिकालावण्यलीलायितम् ।
नो जाने गमयिष्यतस्तव चिरादङ्के दिनं केलिभिः
कस्य श्रीफलपीवरस्तनि भवेदेकादशस्थो गुरुः ॥ १६ ॥
(भानुकरस्यैतौ)

उदञ्चद्वक्षोजद्वयतटभरक्षोभितकटि-
स्फुरद्दृग्भ्यां मन्दीकृतविलसदिन्दीवरयुगम् ।
समुद्यद्भ्रूभङ्गप्रविहितधनुर्भङ्गमनिशं
वयस्तत्पद्माक्ष्याः कथमिव मनो न व्यथयतु ॥ १७ ॥
(लक्ष्मणस्य)

**अथ बालावयववर्णनम्—**

**तत्र केशपाशः—**

आभाति शोभातिशयप्रपञ्चादेणीदृशोऽस्या रमणीयशोभा ।

वेणी लसत्कुन्तलधोरणीनां श्रेणीव किं चारुहरिन्मणीनाम् ॥ १८ ॥

(लक्ष्मणस्य)

आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ
बन्धोत्कर्षनिबद्धमानसतया शून्यां दधाना दृशम् ।
बाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांशुका
ह्रीसंकोचितबाहुमूलसुभगं बध्नाति जूटीं वधूः ॥ १९ ॥

(कस्यापि)

**अथ सीमन्तसिन्दूरम्—**

अये मातर्दृष्ट्वा मुखममृतभानुभ्रमवशा-
त्कचच्छद्मा राहुर्वसति किमु तृष्णातरलितः ।
किमेवं कन्दर्पान्तकतरुणि सिन्दूरसरणि-
च्छलाद्भोक्तुं भूयो बहिरिव रसज्ञां रचयति ॥ २० ॥

(भानुकरस्य)

**अथ भालसिन्दूरम्—**

यस्याः संयमवान्कचो मधुकरैरभ्यर्थ्यमानो मुहु-
र्भृङ्गीगोपनजाभिशापमचिरादुन्मार्ष्टुकामो निजम् ।
सीमन्तेन करेण कोमलरुचा सिन्दूरबिन्दुच्छला-
दातप्तायसपिण्डमण्डलमसावादातुमाकाङ्क्षति ॥ २१ ॥

(गणपतेः)

**अथालकः—**

भालस्थली चन्द्रकलाकलङ्कलेखासु संतक्ष्य ततो विमुक्ता ।
सैव क्रमात्कुण्डलिता कपाले यत्रालकानां श्रियमातनोति ॥ २२ ॥

(गणपतेः)

**अथाननम्—**

अस्यैव रम्भोरु तवाननस्य दृशैव संजीवितमन्मथस्य ।
वनं विधाता ननु नीरजानां नीराजनार्थं किमु निर्मिमीते ॥ २३ ॥

वेणी लसत्कुन्तलधोरणीनां श्रेणीव किं चारुहरिन्मणीनाम् ॥ १८ ॥

(लक्ष्मणस्य)

आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ
बन्धोत्कर्षनिबद्धमानसतया शून्यां दधाना दृशम् ।
बाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांशुका
ह्रीसंकोचितबाहुमूलसुभगं बध्नाति जूटीं वधूः ॥ १९ ॥

(कस्यापि)

**अथ सीमन्तसिन्दूरम्—**

अये मातर्दृष्ट्वा मुखममृतभानुभ्रमवशा-
त्कचच्छद्मा राहुर्वसति किमु तृष्णातरलितः ।
किमेवं कन्दर्पान्तकतरुणि सिन्दूरसरणि-
च्छलाद्धोक्तुं भूयो बहिरिव रसज्ञां रचयति ॥ २० ॥

(भानुकरस्य)

**अथ भालसिन्दूरम्—**

यस्याः संयमवान्कचो मधुकरैरभ्यर्थ्यमानो मुहु-
र्भृङ्गीगोपनजाभिशापमचिरादुन्मार्ष्टुकामो निजम् ।
सीमन्तेन करेण कोमलरुचा सिन्दूरबिन्दुच्छला-
दातप्तायसपिण्डमण्डलमसावादातुमाकाङ्क्षति ॥ २१ ॥

(गणपतेः)

**अथालकः—**

भालस्थली चन्द्रकलाकलङ्कलेखासु संतक्ष्य ततो विमुक्ता ।
सैव क्रमात्कुण्डलिता कपाले यत्रालकानां श्रियमातनोति ॥ २२ ॥

(गणपतेः)

**अथाननम्—**

अस्यैव रम्भोरु तवाननस्य दृशैव संजीवितमन्मथस्य ।
वनं विधाता ननु नीरजानां नीराजनार्थं किमु निर्मिमीते ॥ २३ ॥

अस्यामपूर्व इव कोऽपि कलङ्करिक्त-
श्चन्द्रोऽपरः किमुत तन्मकरध्वजेन ।
रोमावलीगुणमिलत्कुचमन्दरेण
निर्मथ्य नाभिजलधिं ध्रुवमुद्धृतः स्यात् ॥ २४ ॥

(एतौ लक्ष्मणस्य)

विना सायं कोऽयं समुदयति सौरभ्यसुभगः
किरञ्ज्योत्स्नाधारामधिधरणि तारापरिवृढः ।
धनुर्धत्ते स्मारं तिरयति विहारं न तमसां
निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥ २५ ॥

अथ **भ्रुवौ**—

स्मरकल्पद्रुमो बाले तव भाले द्विपत्रितः ।
पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥ २६ ॥

(भानुकरस्यैतौ)

भ्रूरेखायुगलं भाति तस्याश्चपलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशविनिर्गता ॥ २७ ॥

(बिह्लणस्य)

कर्णौ तावत्कुवलयदृशां लोचनाम्भोरुहाभ्या-
मभ्याक्रान्तौ कनकरुचिरो भालदेशोऽपि नेयः ।
इत्याशङ्काकुलितमनसा वेधसा कज्जलौघैः
सीमारेखा व्यरचि निबिडभ्रूलताकैतवेन ॥ २८ ॥

(गणपतेः)

अथ **नयनम्[ने]**—

नयनस्य तुलां चक्रे नलिनेन नतभ्रुवः ।
ऊने च नलिने भृङ्गमाषमे(व)[ष]विधिर्दधौ ॥ २९ ॥

(भानुकरस्य)

अस्यामपूर्व इव कोऽपि कलङ्करिक्त-
श्चन्द्रोऽपरः किमुत तन्मकरध्वजेन ।
रोमावलीगुणमिलत्कुचमन्दरेण
निर्मथ्य नाभिजलधिं ध्रुवमुद्धृतः स्यात् ॥ २४ ॥

(एतौ लक्ष्मणस्य)

विना सायं कोऽयं समुदयति सौरभ्यसुभगः
किरञ्ज्योत्स्नाधारामधिधरणि तारापरिवृढः ।
धनुर्धत्ते स्मारं तिरयति विहारं न तमसां
निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥ २५ ॥

अथ **भ्रुवौ**—

स्मरकल्पद्रुमो बाले तव भाले द्विपत्रितः ।
पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥ २६ ॥

(भानुकरस्यैतौ)

भ्रूरेखायुगलं भाति तस्याश्चपलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशविनिर्गता ॥ २७ ॥

(बिह्लणस्य)

कर्णौ तावत्कुवलयदृशां लोचनाम्भोरुहाभ्या-
मभ्याक्रान्तौ कनकरुचिरो भालदेशोऽपि नेयः ।
इत्याशङ्काकुलितमनसा वेधसा कज्जलौघैः
सीमारेखा व्यरचि निबिडभ्रूलताकैतवेन ॥ २८ ॥

(गणपतेः)

अथ **नयनम्**[**ने**]—

नयनस्य तुलां चक्रे नलिनेन नतभ्रुवः ।
ऊने च नलिने भृङ्गमाषमे(व)[ष]विधिर्दधौ ॥ २९ ॥

(भानुकरस्य)

नतभ्रुवो लोचनखञ्जरीटौ विहारमानङ्गमिहारभेते।
कथं न सानन्दहृदो युवानस्तारुण्यमन्तर्निधिमुन्नयन्तु ॥ ३० ॥
(गणपतेः)

दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम्।
न चेत्कृतः स्यादनयोः प्रयाणे विघ्नं श्रवःकूपनिपातभीत्या ॥ ३१ ॥
(श्रीहर्षस्य)

**अथापाङ्गः—**

पिपासुरिव संचलन्निकटकर्णकूपीव[1]....
ततः प्रतिवलन्पुनः श्रवणपाशभीतोऽभितः।
तनोति तरलाकृतिस्तरललोचने संततं
गतागतकुतूहलं मुहुरपाङ्गरङ्कुस्तव ॥ ३२ ॥
क्वचित्कृष्णार्जुनगुणा क्वचित्कर्णान्तगामिनी।
अपाङ्गश्रीस्तवाभाति सुभ्रु भारतगीरिव ॥ ३३ ॥
(लक्ष्मणस्यैतौ)

यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः।
हृतचैतन्यसर्वस्वा मुह्यन्ते मुग्धकामुकाः ॥ ३४ ॥
(शार्ङ्गधरस्य)

वतंसनीलोत्पलषट्पदानां गीतामृतं श्रोतुमिवोत्तरङ्गौ।
नतभ्रुवो लोचनकृष्णसारौ कर्णान्तिकं संततमाश्रयेते ॥ ३५ ॥
(गणपतेः)

अथ **नासामौक्तिकम्—**

तारापतेर्बिम्बमिव त्वदास्यं संभाव्य भूमीतलशालिनं किम्।
नासाग्रमुक्ताफलकैतवेन तारापि काचिद्विहितावतारा ॥ ३६ ॥
(लक्ष्मणस्य)

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन।
अनङ्गसंजीवनदृष्टशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ ३७ ॥
(वैद्यनाथस्य)

---

१ कूपावनिमिति स्यात्.

नतभ्रुवो लोचनखञ्जरीटौ विहारमानङ्गमिहारभेते ।
कथं न सानन्दहृदो युवानस्तारुण्यमन्तर्निधिमुन्नयन्तु ॥ ३० ॥
(गणपतेः)

दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् ।
न चेत्कृतः स्यादनयोः प्रयाणे विघ्नं श्रवःकूपनिपातभीत्या ॥ ३१ ॥
(श्रीहर्षस्य)

**अथापाङ्गः**—

पिपासुरिव संचलन्निकटकर्णकूपीव[1]....
ततः प्रतिवलन्पुनः श्रवणपाशभीतोऽभितः ।
तनोति तरलाकृतिस्तरललोचने संततं
गतागतकुतूहलं मुहुरपाङ्गरङ्कुस्तव ॥ ३२ ॥

क्वचित्कृष्णार्जुनगुणा क्वचित्कर्णान्तगामिनी ।
अपाङ्गश्रीस्तवाभाति सुभ्रु भारतगीरिव ॥ ३३ ॥
(लक्ष्मणस्यैतौ)

यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः ।
हृतचैतन्यसर्वस्वा मुह्यन्ते मुग्धकामुकाः ॥ ३४ ॥
(शार्ङ्गधरस्य)

वतंसनीलोत्पलषट्पदानां गीतामृतं श्रोतुमिवोत्तरङ्गौ ।
नतभ्रुवो लोचनकृष्णसारौ कर्णान्तिकं संततमाश्रयेते ॥ ३५ ॥
(गणपतेः)

अथ **नासामौक्तिकम्**—

तारापतेर्बिम्बमिव त्वदास्यं संभाव्य भूमीतलशालिनं किम् ।
नासाग्रमुक्ताफलकैतवेन तारापि काचिद्विहितावतारा ॥ ३६ ॥
(लक्ष्मणस्य)

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।
अनङ्गसंजीवनदृष्टशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ ३७ ॥
(वैद्यनाथस्य)

---

१ कूपावनिमिति स्यात्.

अथ **कर्णताटङ्कम्**—

शशी हर्तुं लोभान्मुखकमलशोभां श्रुतितलं
सिषेवे सातङ्कस्तव तरुणि ताटङ्ककपटात्।
तदन्तःपीयूषं निखिलमथ निक्षेप्तुमधरे
मनोजन्मा मुष्णन्मुहुरहह तुच्छं तमकरोत्॥ ३८॥

(रामचन्द्रस्य)

ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचं विधत्ते।
मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम्॥ ३९॥

(बिह्लणस्य)

**अथाधरः**—

तवैष विद्रुमच्छायो मरुमार्ग इवाधरः।
करोति कस्य नो मुग्धे पिपासाकुलितं मनः॥ ४०॥

(कस्यापि)

अथ **कण्ठः**—

कण्ठस्य विदधे कान्ति मुक्ताभरणता यथा।
नास्य स्वभावरम्यस्य मुक्ताभरणता तथा॥ ४१॥

(शकवृद्धेः)

मातङ्गकुम्भसंसर्गजातपातकशङ्कया।
स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले॥ ४२॥

(वैद्यभानोः)

अथ **बाहू**—

शब्दवद्भिरलंकारैरुपेतमतिकोमलम्।
सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम्॥ ४३॥

(शकवृद्धेः)

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः॥ ४४॥

(भासस्य)

अथ **कर्णताटङ्कम्**—

शशी हर्तुं लोभान्मुखकमलशोभां श्रुतितलं
सिषेवे सातङ्कस्तव तरुणि ताटङ्ककपटात् ।
तदन्तःपीयूषं निखिलमथ निक्षेप्तुमधरे
मनोजन्मा मुष्णन्मुहुरहह तुच्छं तमकरोत् ॥ ३८ ॥

(रामचन्द्रस्य)

ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचं विधत्ते ।
मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम् ॥ ३९ ॥

(बिह्लणस्य)

**अथाधरः**—

तवैष विद्रुमच्छायो मरुमार्ग इवाधरः ।
करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥ ४० ॥

(कस्यापि)

अथ **कण्ठः**—

कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा ।
नास्य स्वभावरम्यस्य मुक्ताभरणता तथा ॥ ४१ ॥

(शकवृद्धेः)

मातङ्गकुम्भसंसर्गजातपातकशङ्कया ।
स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले ॥ ४२ ॥

(वैद्यभानोः)

अथ **बाहू**—

शब्दवद्भिरलंकारैरुपेतमतिकोमलम् ।
सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥ ४३ ॥

(शकवृद्धेः)

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ ४४ ॥

(भासस्य)

अथाङ्गुल्यः—

सुदीर्घरेखाशालिन्यो बहुपर्वमनोहराः।
तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ ४५ ॥

(शकवृद्धेः)

अथ स्तनौ—

तवोपकण्ठस्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु।
लीनो मनोजद्विप एव तस्य व्यक्तौ तु गण्डौ किमुरोजपिण्डौ ॥ ४६ ॥

(लक्ष्मणस्य)

सतां समालोकयतां विवेकान्हवींषि हुत्वा स्मरबाणवह्नौ।
धत्ते स्तनश्यामशिरोमिषेण तनूदरी त्र्यायुषभस्मबिन्दुम् ॥ ४७ ॥

(भानुकरस्य)

मध्योऽयं बलिसद्म दृष्टिरधिकं पृथ्वी सुपर्वालयो
बाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति।
इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता संभृतौ
यस्यामात्मकिशोरकौ पविभयव्यग्रेण(जृ)[ज]म्भद्विषः ॥ ४८ ॥

(गणपतेः)

अथ हारः—

सारङ्गाक्ष्या कुचकलशयोरन्तराकाशदेशः
प्राप्तच्छेदः क्वचिदपि चलन्प्रस्खलन्निष्पपात।
नाभीकूपः समजनि ततस्तस्य देहच्युतासौ
नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥ ४९ ॥

(भानुकरस्य)

अथ मध्यः—

नूनं कलत्रात्किमुपद्रुतोऽयं दीनः क्वचिल्लीन इवास्त मध्यः।
तत्राप्सरःसंनिभया च नाभ्या दूनस्ततोऽन्तर्हित एव सद्यः ॥ ५० ॥

(लक्ष्मणस्य)

**अथाङ्गुल्यः—**

सुदीर्घरेखाशालिन्यो बहुपर्वमनोहराः ।
तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ ४५ ॥

(शकवृद्धेः)

**अथ स्तनौ—**

तवोपकण्ठस्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु ।
लीनो मनोजद्विप एव तस्य व्यक्तौ तु गण्डौ किमुरोजपिण्डौ ॥ ४६ ॥

(लक्ष्मणस्य)

सतां समालोकयतां विवेकान्हवींषि हुत्वा स्मरबाणवह्नौ ।
धत्ते स्तनश्यामशिरोमिषेण तनूदरी त्र्यायुषभस्मबिन्दुम् ॥ ४७ ॥

(भानुकरस्य)

मध्योऽयं बलिसद्म दृष्टिरधिकं पृथ्वी सुपर्वालयो
बाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति ।
इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता संभृतौ
यस्यामात्मकिशोरकौ पविभयव्यग्रेण(जृ)[ज]म्भद्विषः ॥ ४८ ॥

(गणपतेः)

**अथ हारः—**

सारङ्गाक्ष्या कुचकलशयोरन्तराकाशदेशः
प्राप्तच्छेदः क्वचिदपि चलन्प्रस्खलन्निष्पपात ।
नाभीकूपः समजनि ततस्तस्य देहच्युतासौ
नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥ ४९ ॥

(भानुकरस्य)

**अथ मध्यः—**

नूनं कलत्रात्किमुपद्रुतोऽयं दीनः क्वचिल्लीन इवास्त मध्यः ।
तत्राप्सरःसंनिभया च नाभ्या दूनस्ततोऽन्तर्हित एव सद्यः ॥ ५० ॥

(लक्ष्मणस्य)

देहं हेमद्युति परिहृताम्भोजवृष्टिं च दृष्टिं
राशीभूतभ्रमरपटलीचारुवेशं च केशम् ।
दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा
सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः ॥ ५१ ॥

तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे
सीमादेशं हरति नृपतौ यौवने जृम्भमाणे ।
मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः
शून्यं मध्यस्थलमिति ततः सर्वतः किंवदन्ती ॥ ५२ ॥

(भानुकरस्यैतौ)

बध्वा वयो मां त्रिवलीगुणेन गृह्णाति रोमावलिवेत्रवल्लीम् ।
इतीव चिन्ताभरभङ्गुरोऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ५३ ॥

तस्या मुखेन्दोरवलोकनेन कराम्बुजं कुड्मलितं विधातुः ।
मध्यस्तदन्तर्गमनादिवासौ कृशाङ्गयष्टेः कृशिमानमाप ॥ ५४ ॥

(द्वौ गणपतेः)

अथ **रोमावली**—

बाले तवोरोजसुवेलशैलं गन्तानुवेलं किमु कामरामः ।
लावण्यपूरे तव सिन्धुनीरे रोमालिरस्यैव किमालि बन्धः ॥ ५५ ॥

संलक्ष्यते संप्रति पक्ष्मलाक्षि क्षामा तवेयं नवरोमराजिः ।
किं बालभावश्रिय एव नूनं निराकृताया इव बाष्पराजिः ॥ ५६ ॥

(लक्ष्मणस्यैतौ)

गम्भीरनाभीह्रदसंनिधाने रराज तन्वी नवरोमराजिः ।
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥ ५७ ॥

(लक्ष्मीधरस्य)

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः ।

देहं हेमद्युति परिहृताम्भोजवृष्टिं च दृष्टिं
राशीभूतभ्रमरपटलीचारुवेशं च केशम् ।
दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा
सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः ॥ ५१ ॥

तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे
सीमादेशं हरति नृपतौ यौवने जृम्भमाणे ।
मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः
शून्यं मध्यस्थलमिति ततः सर्वतः किंवदन्ती ॥ ५२ ॥

(भानुकरस्यैतौ)

बध्वा वयो मां त्रिवलीगुणेन गृह्णाति रोमावलिवेत्रवल्लीम् ।
इतीव चिन्ताभरभङ्गुरोऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ५३ ॥

तस्या मुखेन्दोरवलोकनेन कराम्बुजं कुड्मलितं विधातुः ।
मध्यस्तदन्तर्गमनादिवासौ कृशाङ्गयष्टेः कृशिमानमाप ॥ ५४ ॥

(द्वौ गणपतेः)

अथ **रोमावली**—

बाले तवोरोजसुवेलशैलं गन्तानुवेलं किमु कामरामः ।
लावण्यपूरे तव सिन्धुनीरे रोमालिरस्यैव किमालि बन्धः ॥ ५५ ॥

संलक्ष्यते संप्रति पक्ष्मलाक्षि क्षामा तवेयं नवरोमराजिः ।
किं बालभावश्रिय एव नूनं निराकृताया इव बाष्पराजिः ॥ ५६ ॥

(लक्ष्मणस्यैतौ)

गम्भीरनाभीह्रदसंनिधाने रराज तन्वी नवरोमराजिः ।
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥ ५७ ॥

(लक्ष्मीधरस्य)

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः ।

समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥ ५८ ॥
(शंकराचार्यस्य)

यूनां धैर्यतृणाङ्कुरं कवलयन्व्रीडाम्बुपूरं पिबन्
शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति ।
नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका
रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥ ५९ ॥
निर्णेतव्यो मनसिजकलामन्त्रसिद्धान्तसारो
जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः ।
रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती
पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥ ६० ॥
(भानुकरस्यैतौ)

पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति ।
अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः ॥६१॥
(गणपतेः)

अथ **जघनम्**—

तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् ।
दृष्टं सखीभिर्याभिस्ताः पुंभावं मनसा ययुः ॥ ६२ ॥
(वाल्मीकेः)

**अथोरुः[रू]**—

नूनमूरुद्वयं तस्या रम्भा चपलचक्षुषः ।
सूते यत्कीर्तिकर्पूरपूरं मदनभूपतेः ॥ ६३ ॥
(भानुकरस्य)

अथ **पादौ**—

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ६४ ॥
(बिह्लणस्य)

समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥ ५८ ॥

(शंकराचार्यस्य)

यूनां धैर्यतृणाङ्कुरं कवलयन्व्रीडाम्बुपूरं पिबन्
शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति ।
नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका
रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥ ५९ ॥

निर्णेतव्यो मनसिजकलामन्त्रसिद्धान्तसारो
जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः ।
रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती
पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥ ६० ॥

(भानुकरस्यैतौ)

पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति ।
अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः ॥६१॥

(गणपतेः)

अथ **जघनम्**—

तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् ।
दृष्टं सखीभिर्याभिस्ताः पुंभावं मनसा ययुः ॥ ६२ ॥

(वाल्मीकेः)

अथ**ोरुः**[रू]—

नूनमूरुद्वयं तस्या रम्भा चपलचक्षुषः ।
सूते यत्कीर्तिकर्पूरपूरं मदनभूपतेः ॥ ६३ ॥

(भानुकरस्य)

अथ **पादौ**—

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ६४ ॥

(बिह्लणस्य)

अथैतस्ततो **वर्णनम्**—

जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा
संकोचं समुपागते स भगवान्दुःस्थः सरोजासनः ।
भुग्नं भ्रूलतिकायुगं विहितवान्वक्रे दृशौ सृष्टवान्
मध्यं विस्मृतवान्कचं च कुटिलं बामभ्रुवः कृतवान् ॥ ६५ ॥

जानीमो वदनं सरोरुहदृशो निर्माय पश्यन्मुहु-
र्हृष्यत्कामकठोरपावकशिखासंतापितः पद्मभूः ।
रम्भामूरुतटीं स्तनं रसघटीं पीयूषवीचीं वचो
बाहू बालबिसं करं किसलयं नाभीं सरो निर्ममे ॥ ६६ ॥

व्याकोशकोकनदशोककरः करोऽयं
खेलच्चकोरमदचोरमिदं च चक्षुः ।
उन्निद्र[1]विद्रुमरहस्यहरोऽधरोऽयं
तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥ ६७ ॥

(भानुकरस्यैते)

इति श्रीआङ्कोतकर**लक्ष्मणभट्ट**कृतायां **पद्यरचनायां**
चतुर्थो व्यापारः ।

---

पञ्चमो व्यापारः ।

अथ **विरहिणीवर्णनम्**—

लसन्मल्लीमाल्यं मदनशरशल्यं हि मनुते
सुपूरं कर्पूरं विमलमपि दूरं विकिरति ।
परं तारं हारं पुनरुरसि भारं कलयति
यदि[2] प्राणान्बाला कलयति च हालाहलमिव ॥ १ ॥

इयं धत्ते धीरे मलयजसमीरे न च मुदं
न पद्मानां वृन्दे ललितमकरन्देऽपि रमते ।
न वा सा सानन्दा भवति नवकुन्दावलिकुले
तदेतस्या बाधाहरमपि समाधानमिह किम् ॥ २ ॥

---

१. उद्भिन्नेति पाठान्तरम्. २. वरानिति प्रतिभाति.

अथैतस्ततो वर्णनम्—

जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा
संकोचं समुपागते स भगवान्दुःस्थः सरोजासनः ।
भुग्नं भ्रूलतिकायुगं विहितवान्वक्रे दृशौ सृष्टवान्
मध्यं विस्मृतवान्कचं च कुटिलं वामभ्रुवः क्लृप्तवान् ॥ ६५ ॥
जानीमो वदनं सरोरुहदृशो निर्माय पश्यन्मुहु-
र्हृष्यत्कामकठोरपावकशिखासंतापितः पद्मभूः ।
रम्भामूरुतटीं स्तनं रसघटीं पीयूषवीचीं वचो
बाहू बालबिसं करं किसलयं नाभीं सरो निर्ममे ॥ ६६ ॥
व्याकोशकोकनदशोककरः करोऽयं
खेलच्चकोरमदचोरमिदं च चक्षुः ।
उन्निद्र[1]विद्रुमरहस्यहरोऽधरोऽयं
तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥ ६७ ॥
(भानुकरस्यैते)

इति श्रीआङ्कोतकरलक्ष्मणभट्टकृतायां **पद्यरचनायां**
चतुर्थो व्यापारः ।

---

पञ्चमो व्यापारः ।

अथ **विरहिणीवर्णनम्**—

लसन्मल्लीमाल्यं मदनशरशल्यं हि मनुते
सुपूरं कर्पूरं विमलमपि दूरं विकिरति ।
परं तारं हारं पुनरुरसि भारं कलयति
[2]यदि प्राणान्बाला कलयति च हालाहलमिव ॥ १ ॥
इयं धत्ते धीरे मलयजसमीरे न च मुदं
न पद्मानां वृन्दे ललितमकरन्देऽपि रमते ।
न वा सा सानन्दा भवति नवकुन्दावलिकुले
तदेतस्या बाधाहरमपि समाधानमिह किम् ॥ २ ॥

---

१. उद्भिन्नेति पाठान्तरम्. २. वरानिति प्रतिभाति.

स्थगयति नयनास्त्रं छद्मना धूमधूम्रं
प्रथयति च नितान्तं कार्श्यमङ्गप्रकृत्या ।
अहह विरहबाधां छादयत्यम्बुजाक्षी
तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥ ३ ॥

(लक्ष्मणस्यैते)

घनोऽयं चेदञ्चेदुपरि विकिरंश्चन्दनरसा-
नुदारा नैहारी सरिदुरसि हारीभवति वा ।
समन्तान्मार्णाली चिरमुपवनाली मिलति वा
तदप्यस्यास्तापो हरिविरहजः किं विरमति ॥ ४ ॥

चुलुकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् ।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि ॥ ५ ॥

(रामचन्द्रस्यैतौ)

उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते
स्फोटः स्यादिति नाङ्कक मलयजक्षोदाम्भसा सिच्यते ।
स्यादस्यातिभरात्पराभव इति त्रासान्नवा पल्लवा-
रोपो वक्षसि तत्कथं वरतनोर्बाधा समाधीयते[ताम्] ॥ ६ ॥

(जयदेवस्य)

चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्ति धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
आरब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते ॥ ७ ॥

(कस्यापि)

परिम्लानं पीनस्तनजघनसंगादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यस्तं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ ८ ॥

(कालिदासस्य)

17644

स्थगयति नयनास्रं छद्मना धूमधूम्रं
प्रथयति च नितान्तं कार्श्यमङ्गप्रकृत्या ।
अहह विरहबाधां छादयत्यम्बुजाक्षी
तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥ ३ ॥

(लक्ष्मणस्यैते)

घनोऽयं चेदञ्चेदुपरि विकिरंश्चन्दनरसा-
नुदारा नैहारी सरिदुरसि हारीभवति वा ।
समन्तान्मार्णाली चिरमुपवनाली मिलति वा
तदप्यस्यास्तापो हरिविरहजः किं विरमति ॥ ४ ॥

चुलुकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् ।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि ॥ ५ ॥

(रामचन्द्रस्यैतौ)

उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते
स्फोटः स्यादिति नाङ्कं मलयजक्षोदाम्भसा सिच्यते ।
स्यादस्यातिभरात्पराभव इति त्रासान्नवा पल्लवा-
रोपो वक्षसि तत्कथं वरतनोर्बाधा समाधीयते[ताम्] ॥ ६ ॥

(जयदेवस्य)

चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
आरब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते ॥ ७ ॥

(कस्यापि)

परिम्लानं पीनस्तनजघनसंगादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यस्तं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ ८ ॥

(कालिदासस्य)

17644

व्यजनं व्यजनं जलं जलं घनसारो घनसार इत्यभूत् ।
अवरोधपुरेषु सुभ्रुवां कुररीणामिव कातरो ध्वनिः ॥ ९ ॥
(कस्यापि)

हन्तालि संतापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि ।
संताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः ॥ १० ॥
(वाहिनीपतेः)

लतामूले लीनो हरिणपरिहीनो हिमकरः
स्खलन्मुक्ताकारा गलति जलधारा कुवलयात् ।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो[1]
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥ ११ ॥

अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः ।
अधिखञ्जनचञ्चु मौलिकाली फलितं कस्य सुजन्मनस्तपोभिः ॥ १२ ॥
(एतौ षाण्मासिकस्य)

धाटीश्वेतोभवनरपतौ कुर्वति क्रूरचापे
काञ्ची जाता कलकलवती कुन्तलो निष्पपात ।
अङ्गे तापज्वरपरिभवः प्रादुरासीदसीमो
लेभे कम्पावलिभिरतुलं चापलं चोलदेशः ॥ १३ ॥

शङ्के पङ्करुहदलदृशो वीक्ष्य वेणीं विलग्नां
....प्राप्त्यै शिव शिव घनं बन्धनं केशपाशः ।
वाग्वैदग्ध्यं वपुरुपचयं लास्यमास्येन्दुबिम्बं
चेतो धैर्यं नयनयुगलं चातुरीमुत्ससर्ज(?) ॥ १४ ॥

नयनोत्पलजलधारां दृष्ट्वा वारांनिधिभ्रान्त्या ।
वडवानल इव भगवान्भ्रमति तनौ कृशतनोस्तापः ॥ १५ ॥

लीनानसून्सरोरुहदृष्टेरन्वेष्टुमेष विषमेषुः ।
भ्रमति द्राग्वपुरन्तः संतापं दीपमादाय ॥ १६ ॥

1. 'जन्मायमनिलो' इति पाठान्तरम्.

व्यजनं व्यजनं जलं जलं घनसारो घनसार इत्यभूत्।
अवरोधपुरेषु सुभ्रुवां कुररीणामिव कातरो ध्वनिः॥ ९॥
(कस्यापि)

हन्तालि संतापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि।
संताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः॥ १०॥
(वाहिनीपतेः)

लतामूले लीनो हरिणपरिहीनो हिमकरः
स्खलन्मुक्ताकारा गलति जलधारा कुवलयात्।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः॥ ११॥

अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः।
अधिखञ्जनचञ्चु मौलिकाली फलितं कस्य सुजन्मनस्तपोभिः॥ १२॥
(एतौ षाण्मासिकस्य)

धाटीश्चेतोभवनरपतौ कुर्वति क्रूरचापे
काञ्ची जाता कलकलवती कुन्तलो निष्पपात।
अङ्के तापज्वरपरिभवः प्रादुरासीदसीमो
लेभे कम्पावलिभिरतुलं चापलं चोलदेशः॥ १३॥

शङ्के पङ्करुहदलदृशो वीक्ष्य वेणीं विलग्नां
····प्राप्त्यै शिव शिव घनं बन्धनं केशपाशः।
वाग्वैदग्ध्यं वपुरुपचयं लास्यमास्येन्दुबिम्बं
चेतो धैर्यं नयनयुगलं चातुरीमुत्ससर्ज(?)॥ १४॥

नयनोत्पलजलधारां दृष्ट्वा वारांनिधिभ्रान्त्या।
वडवानल इव भगवान्भ्रमति तनौ कृशतनोस्तापः॥ १५॥

लीनानसून्सरोरुहदृष्टेरन्वेष्टुमेष विषमेषुः।
भ्रमति द्रागवपुरन्तः संतापं दीपमादाय॥ १६॥

१. 'जन्मायमनिलो' इति पाठान्तरम्.

चूडारत्नमपांनिधिर्यदि भवेच्चेत्कुण्डलं गण्डकी
कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी ।
मुक्तास्रक् सुरनिम्नगा यदि यदि स्यान्मेखला नर्मदा
कौशेयं यदि कौशिकी कृशतनोस्तापस्तदापैति वा ॥ १७ ॥
जीवेन तुलितं प्रेम सखि मूढेन वेधसा ।
लघुर्जीवो ययौ कण्ठं गुरु प्रेम हृदि स्थितम् ॥ १८ ॥
(षडेते भानुकरस्य)
तस्यास्तनौ विरहताण्डवरङ्गभूमौ
स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य ।
नान्दीं पपाठ पृथुवेपथुवेपमान-
काञ्चीलताकलरवैः स्मरसूत्रधारः ॥ १९ ॥
श्रीखण्डद्रवदीर्घिकापरिवृतप्रान्तासु निःशेषतः
प्रालेयाचलकन्दरासु विहितक्रीडासु मन्दानिलैः ।
माघीभिः क्षणदाभिरेव जनितं गण्डोपधानीभव-
च्चन्द्रं तल्पमपाकरिष्यति न वा संतापमेणीदृशः ॥ २० ॥
मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसंकाशम् ।
केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः ॥ २१ ॥
जानीमस्तव गौरि चेतसि चिरं शंभुः समुज्जृम्भते
तापो नेत्रतनूनपादिव तनौ तीव्रः समुन्मीलति ।
अक्ष्णोरश्रुमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः
पाण्डिम्नः कपटेन चन्द्रकलिकाकान्तिः समुन्मीलति ॥ २२ ॥
प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः ।
शमयति मम देहदाहमेतं सपदि कथापि यथा नरेन्द्रसूनोः ॥ २३ ॥
( पञ्चैते गणपतेः )

**अथ स्मरोपालम्भः—**

हृदयमाश्रयसे यदि मामकं ज्वलयसि त्वमनङ्ग तदेव किम् ।
स्वयमपि क्षणदग्धनिजेन्धनः क्व भवितासि हताश हुताशवत् ॥ २४ ॥
( श्रीहर्षस्य )

चूडारत्नमपांनिधिर्यदि भवेच्चेत्कुण्डलं गण्डकी
कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी।
मुक्तास्रक् सुरनिम्नगा यदि यदि स्यान्मेखला नर्मदा
कौशेयं यदि कौशिकी कृशतनोस्तापस्तदापैति वा॥ १७॥

जीवेन तुलितं प्रेम सखि मूढेन वेधसा।
लघुर्जीवो ययौ कण्ठं गुरु प्रेम हृदि स्थितम्॥ १८॥

(षडेते भानुकरस्य)

तस्यास्तनौ विरहताण्डवरङ्गभूमौ
स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य।
नान्दीं पपाठ पृथुवेपथुवेपमान-
काञ्चीलताकलरवैः स्मरसूत्रधारः॥ १९॥

श्रीखण्डद्रवदीर्घिकापरिवृतप्रान्तासु निःशेषतः
प्रालेयाचलकन्दरासु विहितक्रीडासु मन्दानिलैः।
माघीभिः क्षणदाभिरेव जनितं गण्डोपधानीभव-
च्चन्द्रं तल्पमपाकरिष्यति न वा संतापमेणीदृशः॥ २०॥

मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसंकाशम्।
केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः॥ २१॥

जानीमस्तव गौरि चेतसि चिरं शंभुः समुज्जृम्भते
तापो नेत्रतनूनपादिव तनौ तीव्रः समुन्मीलति।
अक्ष्णोरश्रुमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः
पाण्डिम्नः कपटेन चन्द्रकलिकाकान्तिः समुन्मीलति॥ २२॥

प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः।
शमयति मम देहदाहमेतं सपदि कथापि यथा नरेन्द्रसूनोः॥ २३॥

(पञ्चैते गणपतेः)

अथ **स्मरोपालम्भः**—

हृदयमाश्रयसे यदि मामकं ज्वलयसि त्वमनङ्ग तदेव किम्।
स्वयमपि क्षणदग्धनिजेन्धनः क भवितासि हताश हुताशवत्॥ २४॥

(श्रीहर्षस्य)

शिव शिव सहसैव पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म ।
भ्रमयति जगदेष यत्पिशाचः स च मणिमन्त्रमहौषधैर्न साध्यः ॥ २५ ॥
(वाणीविलासस्य)

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतायां **पद्यरचनायां**
पञ्चमो व्यापारः ।

---

षष्ठो व्यापारः ।

अथ **नायकविप्रलम्भः**—

हारो नारोपितः कण्ठे स्पर्शसंरोधभीरुणा[1] ।
इदानीमन्तरे जाताः सरित्सागरपर्वताः ॥ १ ॥
(वाल्मीकेः)

दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ २ ॥
(कस्यापि)

किमकारि मन्दमतिना रतिपतिना नीतितन्त्रनिपुणेन ।
स्यूतासि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ ३ ॥
(रामचन्द्रस्य)

समुत्कीर्णे तन्व्या निशितनयनान्तेन मृदिते
स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमति ।
मदन्तःकेदारे मदनकृषिकारेण जनिता
चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ४ ॥
(मैथिलस्य)

श्रीखण्डानिल निर्वृतो भव सखे सिद्धानुभावो भवान्
भ्रातः कोकिल साधितं निजहितं मूकत्वमालम्ब्यताम् ।
शीतांशो विहितं यशो बहुतरं तत्तात विश्रम्यता-
मस्मत्प्राणबहिःप्रयाणपटहो दध्वान धन्योऽम्बुदः ॥ ५ ॥
(कस्यापि)

---

१. 'मया विश्लेषभीरुणा' इति पाठान्तरम्.

शिव शिव सहसैव पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म ।
भ्रमयति जगदेष यत्पिशाचः स च मणिमन्त्रमहौषधैर्न साध्यः ॥ २५ ॥
(वाणीविलासस्य)

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतायां **पद्यरचनायां**
पञ्चमो व्यापारः ।

---

षष्ठो व्यापारः ।

अथ **नायकविप्रलम्भः**—

हारो नारोपितः कण्ठे स्पर्शसंरोधभीरुणा[1] ।
इदानीमन्तरे जाताः सरित्सागरपर्वताः ॥ १ ॥
(वाल्मीकेः)

दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ २ ॥
(कस्यापि)

किमकारि मन्दमतिना रतिपतिना नीतितन्त्रनिपुणेन ।
स्यूतासि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ ३ ॥
(रामचन्द्रस्य)

समुत्कीर्णे तन्व्या निशितनयनान्तेन मृदिते
स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमति ।
मदन्तःकेदारे मदनकृषिकारेण जनिता
चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ४ ॥
(मैथिलस्य)

श्रीखण्डानिल निर्वृतो भव सखे सिद्धानुभावो भवान्
भ्रातः कोकिल साधितं निजहितं मूकत्वमालम्ब्यताम् ।
शीतांशो विहितं यशो बहुतरं तत्तात विश्रम्यता-
मस्मत्प्राणबहिःप्रयाणपटहो दध्वान धन्योऽम्बुदः ॥ ५ ॥
(कस्यापि)

---

१. 'मया विश्लेषभीरुणा' इति पाठान्तरम्.

रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूयं
कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः।
आं जानीमो गमनसमये हन्त कान्तारसीम-
न्येकाकिन्याः कुवलयदृशो लुण्ठिता यौवनश्रीः॥ ६॥

(उमापत्युपाध्यायस्य)

अत्रासितं शयितमत्र निपीतमत्र
तोयं तया सह मया विधिवञ्चितेन।
इत्यादि हन्त परिचिन्तयतो वनान्ते
रामस्य लोचनपयोभिरभूत्पयोधिः॥ ७॥

(कस्यापि)

खं यान्ति नो नीरधरा न यावच्छम्पा न झम्पाकुलिताश्च चेलुः।
रामस्य तावन्नयनाम्बुपूरैः पम्पा तु संपातिभिरापुपूरे॥ ८॥

वसन्त किं हन्त तनोषि तापं माकन्द मन्दं क्षिप मा मरन्दम्।
अचण्डभानो जहि चण्डभावं रामस्य कोपी खलु कोऽपि कालः॥ ९॥

माकन्द क्षिप मा मरन्दनिकरं मूको भव त्वं शुक
स्फारं कोकिल कोमलं कलरवं भ्रातः क्षणं संहर।
सौगन्ध्यं वह गन्धवाहन मनाक्सर्वैः क्षणं क्षम्यतां
जानीध्वं रघुनायकस्य यदयं कालः करालो महान्॥ १०॥

(लक्ष्मणस्यैते)

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥ ११॥

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
त्त्रासीनः स्तनितविमुखो याममात्रं सहस्व।

१. 'तरुणस्य तस्य' इति पाठान्तरम्.

रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूयं
कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः।
आं जानीमो गमनसमये हन्त कान्तारसीम-
न्येकाकिन्याः कुवलयदृशो लुण्ठिता यौवनश्रीः॥ ६॥

(उमापत्युपाध्यायस्य)

अत्रासितं शयितमत्र निपीतमत्र
तोयं तया सह मया विधिवञ्चितेन।
इत्यादि हन्त परिचिन्तयतो वनान्ते
रामस्य लोचनपयोभिरभूत्पयोधिः॥ ७॥

(कस्यापि)

खं यान्ति नो नीरधरा न यावच्छम्पा न झम्पाकुलिताश्च चेलुः।
रामस्य तावन्नयनाम्बुपूरैः पम्पा तु संपातिभिरापुपूरे॥ ८॥
वसन्त किं हन्त तनोषि तापं माकन्द मन्दं क्षिप मा मरन्दम्।
अचण्डभानो जहि चण्डभावं रामस्य कोपी खलु कोऽपि कालः॥ ९॥

माकन्द क्षिप मा मरन्दनिकरं मूको भव त्वं शुक
स्फारं कोकिल कोमलं कलरवं भ्रातः क्षणं संहर।
सौगन्ध्यं वह गन्धवाहन मनाक्सर्वैः क्षणं क्षम्यतां
जानीध्वं रघुनायकस्य यदयं कालः करालो महान्॥ १०॥

(लक्ष्मणस्यैते)

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥ ११॥

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
त्तत्रासीनः स्तनितविमुखो याममात्रं सहस्व।

---

१. 'तरुणस्य तस्य' इति पाठान्तरम्.

माभूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचि-
त्सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ १२ ॥
(कालिदासस्यैतौ)

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १३ ॥

वनी मुनीनां तटिनी तरूणां दरी गिरीणां च गवेषितैव ।
अतः परं लक्ष्मण पक्ष्मलाक्षीं प्राणा बहिर्भूय गवेषयन्तु ॥ १४ ॥
(कस्याप्येतौ)

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ १५ ॥
(निद्रादरिद्रस्य)

कुवलयनयनाकुचान्तरेषु[1] क्षणमपि येषु न शेरते युवानः ।
शिव शिव करुणापराङ्मुखोऽयं गणयति तान्यपि वासराणि वेधाः॥१६॥

पुनरपि मिलनं यदा कदाचित्प्रियतमया कृपया भवेद्विधातुः ।
हरिरिव करवै हृदि प्रतिष्ठां हर इव किं तनवै तनोरभिन्नाम् ॥ १७ ॥
(कस्याप्येतौ)

अद्यापि तन्मनसि संपरिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य कोपा-
त्कर्णे कृतं कनकपत्रमनालपन्त्या ॥ १८ ॥
(बिह्लणस्य)

१. 'भुजान्तराले' इति पाठान्तरम्.

माभूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचि-
त्सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ १२ ॥
(कालिदासस्यैतौ)

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १३ ॥

वनी मुनीनां तटिनी तरूणां दरी गिरीणां च गवेषितैव।
अतः परं लक्ष्मण पक्ष्मलाक्षीं प्राणा बहिर्भूय गवेषयन्तु ॥ १४ ॥
(कस्याप्येतौ)

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ १५ ॥
(निद्रादरिद्रस्य)

कुवलयनयनाकुचान्तरेषु[1] क्षणमपि येषु न शेरते युवानः।
शिव शिव करुणापराङ्मुखोऽयं गणयति तान्यपि वासराणि वेधाः ॥ १६ ॥

पुनरपि मिलनं यदा कदाचित्प्रियतमया कृपया भवेद्विधातुः।
हरिरिव करवै हृदि प्रतिष्ठां हर इव किं तनवै तनोरभिन्नाम् ॥ १७ ॥
(कस्याप्येतौ)

अद्यापि तन्मनसि संपरिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या।
जीवेति मङ्गलवचः परिहृत्य कोपा-
त्कर्णे कृतं कनकपत्रमनालपन्त्या ॥ १८ ॥
(बिह्लणस्य)

---

१. 'भुजान्तराले' इति पाठान्तरम्.

स्खलदंशुकमव्यवस्थतारं स्मितकान्ति स्नपिताधरप्रवालम् ।
असमाप्तनकारमाप्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥ १९ ॥

कुन्दं दन्तैर्मधु निगदितैः षट्पदीं दृग्विलासै-
रेभिर्हासैरमृतलहरी कुन्तलैरम्बुवाहम् ।
इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां
त्वं जित्वा मे वससि हृदये तेन ते मां द्विषन्ति ॥ २० ॥

(भानुकरस्यैतौ)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**विरचितायां **पद्यरचनायां**
षष्ठो व्यापारः ।

---

सप्तमो व्यापारः ।

अथ संक्षेपतो वक्ष्ये मृगाक्षीणामवान्तरम् ।
भेदं बुधाः सुधाकल्पं तमाकल्पं भजन्त्वमी ॥ १ ॥

अथ **कुलाङ्गना**—

प्रेरयन्ति हृदयं न लोचनं नर्तयन्ति मदनं न दुर्यशः ।
वारयन्त्यविनयं न संभ्रमं स्नेहसारशरणं कुलस्त्रियः ॥ २ ॥

( गणपतेः )

पदन्यासो गेहाद्बहिरहिफणारोपणसमो
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः ।
निजावासादन्यद्भवनमपरद्वीपतुलितं
पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ ३ ॥

( लक्ष्मणठक्कुरस्य )

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ४ ॥

( भानुकरस्य )

---

१. मेघदूते तु 'अन्वास्यैनां' इति मल्लिनाथसंमतः पाठः.

स्खलदंशुकमव्यवस्थतारं स्मितकान्ति स्नपिताधरप्रवालम् ।
असमाप्तनकारमाप्तशोभं हरिणाङ्क हरिणीदृशः स्मरामः ॥ १९ ॥

कुन्दं दन्तैर्मधु निगदितैः षट्पदीं दृग्विलासै-
रेभिर्हासैरमृतलहरी कुन्तलैरम्बुवाहम् ।
इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां
त्वं जित्वा मे वससि हृदये तेन ते मां द्विषन्ति ॥ २० ॥
(भानुकरस्यैतौ)

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां **पद्यरचनायां**
षष्ठो व्यापारः ।

---

सप्तमो व्यापारः ।

अथ संक्षेपतो वक्ष्ये मृगाक्षीणामवान्तरम् ।
भेदं बुधाः सुधाकल्पं तमाकल्पं भजन्त्वमी ॥ १ ॥

अथ **कुलाङ्गना**—

प्रेरयन्ति हृदयं न लोचनं नर्तयन्ति मदनं न दुर्यशः ।
वारयन्त्यविनयं न संभ्रमं स्नेहसारशरणं कुलस्त्रियः ॥ २ ॥
( गणपतेः )

पदन्यासो गेहाद्बहिरहिफणारोपणसमो
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः ।
निजावासादन्यद्भवनमपरद्वीपतुलितं
पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ ३ ॥
( लक्ष्मणठक्कुरस्य )

गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ४ ॥
( भानुकरस्य )

---

१. मेघदूते तु 'अन्वास्यैनां' इति मल्लिनाथसंमतः पाठः.

लज्जावशान्नमितमन्थरदृष्टिपातं
　　यैश्चुम्बितं कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु
　　तृप्तिः कथं भवति वेशवधूमुखेषु ॥ ५ ॥

(कस्यापि)

अथ **कुलाङ्गनाकोपः**—

तारुण्यं मुखमण्डले न च वचोवैदग्ध्यमन्यादृशं
　　न भ्रूभङ्गपरिग्रहो न च रहः प्रश्नेऽपि मौनस्थितिः ।
एवं संप्रति तर्क्यते तु सुदृशः कोपस्तु यद्वस्तुनि
　　स्वाधीने पुनरेव पङ्कजदृशो यन्न प्रभुत्वग्रहः ॥ ६ ॥

(गणपतेः)

मय्यायाते सपदि शयनादुत्थितं चारुवाक्यं
　　बध्वा पाणी बहु निगदितं क्षालितं पादपद्मम् ।
दत्वा वीटीं सविनयमथोद्वीजितं तालवृन्तै-
　　र्ब्रूते कोपं कुवलयदृशो भूयसी भक्तिरेव ॥ ७ ॥

अथ **प्रोष्यत्पतिका**—

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
　　स्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद ।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
　　स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥ ८ ॥

(भानुकरस्यैतौ)

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
　　धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
　　गन्तव्ये सति जीवितं प्रियसुहृत्सार्थः किमुत्सृज्यते ॥ ९ ॥
यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां गणे
　　बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले ।

लज्जावशान्नमितमन्थरदृष्टिपातं
येश्चुम्बितं कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु
तृप्तिः कथं भवति वेशवधूमुखेषु ॥ ५ ॥
( कस्यापि )

अथ **कुलाङ्गनाकोपः**—

तारुण्यं मुखमण्डले न च वचोवैदग्ध्यमन्यादृशं
न भ्रूभङ्गपरिग्रहो न च रहः प्रश्नेऽपि मौनस्थितिः ।
एवं संप्रति तर्क्यते तु सुदृशः कोपस्तु यद्वस्तुनि
स्वाधीने पुनरेव पङ्कजदृशो यत्र प्रभुत्वग्रहः ॥ ६ ॥
( गणपतेः )

मय्यायाते सपदि शयनादुत्थितं चारुवाक्यं
बध्वा पाणी बहु निगदितं क्षालितं पादपद्मम् ।
दत्वा वीटीं सविनयमथोद्वीजितं तालवृन्तै-
र्ब्रूते कोपं कुवलयदृशो भूयसी भक्तिरेव ॥ ७ ॥

अथ **प्रोष्यत्पतिका**—

नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद ।
ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥ ८ ॥
( भानुकरस्यैतौ )

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितं प्रियसुहृत्सार्थः किमुत्सृज्यते ॥ ९ ॥
यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां गणे
बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले ।

प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः
किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ १० ॥
(कस्याप्येतौ)

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ ११ ॥
(दण्डिनः)

उद्यद्बर्हिषि दर्दुरारवपुषि प्रक्षीणपान्थायुषि
च्योतद्विप्रुषि चन्द्ररुङ्मुषि सखे हंसद्विषि प्रावृषि ।
मा मा मुञ्च कुचाग्रसंततपतद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्याप्तुसभास्वत्त्विषि ॥ १२ ॥
(बाणस्य)

अथ प्रोषितपतिका—

लिखति न गणयति रेखां निर्भरबाष्पाम्बुधौतगण्डतला ।
अवधिदिवसावसानं माभूदिति शङ्किता बाला ॥ १३ ॥
(मोरिकायाः)

समर्प्य हृदि दारुणां मदनवेदनां भूयसी-
मनेन वनवर्त्मना प्रचलितः स मे वल्लभः ।
न वामदिशि शब्दितं किमिति वा त्वया वायस
त्वया सदनसारिके किमिति वा कृतं न क्षुतम् ॥ १४ ॥
(भानुकरस्य)

अथोत्कण्ठिता—

द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि ।
प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ १५ ॥
(भानुकरस्य)

अम्भोरुहाक्षि शम्भोश्चरणावाराधितौ केन ।
यस्मै विचलितवदना मदनाकूतं विभावयसि ॥ १६ ॥
(गणपतेः)

प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्राद‍तिक्रामतः
किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ १० ॥
(कस्याप्येतौ)

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ ११ ॥
(दण्डिनः)

उद्यद्बर्हिषि दर्दुरारवपुषि प्रक्षीणपान्थायुषि
च्योतद्विप्रुषि चन्द्ररुग्मुषि सखे हंसद्विषि प्रावृषि ।
मा मा मुञ्च कुचाग्रसंततपतद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्याप्तभास्वत्त्विषि ॥ १२ ॥
(बाणस्य)

अथ **प्रोषितपतिका**—

लिखति न गणयति रेखां निर्भरबाष्पाम्बुधौतगण्डतला ।
अवधिदिवसावसानं माभूदिति शङ्किता बाला ॥ १३ ॥
(मोरिकायाः)

समर्प्य हृदि दारुणां मदनवेदनां भूयसी-
मनेन वनवर्त्मना प्रचलितः स मे वल्लभः ।
न वामदिशि शब्दितं किमिति वा त्वया वायस
त्वया सदनसारिके किमिति वा कृतं न क्षुतम् ॥ १४ ॥
(भानुकरस्य)

**अथोत्कण्ठिता**—

द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि ।
प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ १५ ॥
(भानुकरस्य)

अम्भोरुहाक्षि शम्भोश्चरणावाराधितौ केन ।
यस्मै विचलितवदना मदनाकूतं विभावयसि ॥ १६ ॥
(गणपतेः)

अथाङ्गनावान्तरभेदाः। तत्र **नवोढा**—

काञ्चीदाम निवेशयन्वितनुते वासः श्लथं सुभ्रुवो
हारं वक्षसि योजयन्करतलं धत्ते कुचाम्भोरुहे।
जल्पंश्चाटुवचोऽधरं धयति यत्प्रेयान्कुतो विस्मयः
पांसुं चक्षुषि विक्षिपन्यदि धनं गृह्णासि(ति) पाटच्चरः॥ १७॥
(भानुकरस्य)

बलान्नीता पार्श्वे मुखमभिमुखं नैव कुरुते
धुनाना मूर्धानं हरति बहुशश्चुम्बनविधिम्।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढा वोढारं रमयति च संतापयति च॥ १८॥
(कस्यापि)

विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं समया सखी।
इति नवोढवधूवचनैर्युवा मुदमगादधिकां सुरतादपि॥ १९॥
(रुद्रस्य)

चुम्बनेषु परिवर्तिताधरं हस्तरोधि रसनाविघट्टने।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम्॥ २०॥
(कालिदासस्य)

अथ **विस्रब्धनवोढा**—

दत्तं करं वक्षसि मीलिताक्षी श्लथेन दूरीकुरुते करेण।
आचुम्बिता नेति मुहुर्विधत्ते मुखं पुनः संमुखमेव धत्ते॥ २१॥
(गणपतेः)

दीपाङ्कुरः स्फुरति पश्यति केलिकीरो
जाले निवेशितमुखी च सखी चकास्ति।
इत्थं विचिन्त्य वचसा न शशाक बाला
नाथं निषेद्धुमनिषेद्धुमपि त्रपाभिः॥ २२॥
(भानुकरस्य)

अथाङ्गनावान्तरभेदाः । तत्र **नवोढा**—

काञ्चीदाम निवेशयन्वितनुते वासः श्लथं सुभ्रुवो
हारं वक्षसि योजयन्करतलं धत्ते कुचाम्भोरुहे ।
जल्पंश्चाटुवचोऽधरं धयति यत्प्रेयान्कुतो विस्मयः
पांसुं चक्षुषि विक्षिपन्यदि धनं गृह्णासि(ति) पाटच्चरः ॥ १७ ॥
(भानुकरस्य)

बलान्नीता पार्श्वे मुखमभिमुखं नैव कुरुते
धुनाना मूर्धानं हरति बहुशश्चुम्बनविधिम् ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढा वोढारं रमयति च संतापयति च ॥ १८ ॥
(कस्यापि)

विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं समया सखी ।
इति नवोढवधूवचनैर्युवा मुदमगादधिकां सुरतादपि ॥ १९ ॥
(रुद्रस्य)

चुम्बनेषु परिवर्तिताधरं हस्तरोधि रसनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ २० ॥
(कालिदासस्य)

अथ **विस्रब्धनवोढा**—

दत्तं करं वक्षसि मीलिताक्षी श्लथेन दूरीकुरुते करेण ।
आचुम्बिता नेति मुहुर्विधत्ते मुखं पुनः संमुखमेव धत्ते ॥ २१ ॥
(गणपतेः)

दीपाङ्कुरः स्फुरति पश्यति केलिकीरो
जाले निवेशितमुखी च सखी चकास्ति ।
इत्थं विचिन्त्य वचसा न शशाक बाला
नाथं निषेद्धुमनिषेद्धुमपि त्रपाभिः ॥ २२ ॥
(भानुकरस्य)

अथ मुग्धा—

नीरात्तीरमुपागता श्रवणयोः सीम्नः(म्नि) स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥ २३ ॥

अथ मध्या—

स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
निद्रां विधातुमविधातुमपि प्रपेदे ॥ २४ ॥

(भानुकरस्यैतौ)

अथ प्रौढा—

मदानने चुम्बनचञ्चलस्य प्रियस्य संस्पृष्टकुचस्थलस्य ।
नीवीषु भावी करसंनिवेशस्तद्वामनी यामिनि मैव भूयाः ॥ २५ ॥

(लक्ष्मणस्य)

अथासती—

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलावनविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
स्मराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ २६ ॥

अथ विदग्धासती—

देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो
मातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते ।
दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा
वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ २७ ॥

(भानुकरस्यैतौ)

अथ मुग्धा—

नीरात्तीरमुपागता श्रवणयोः सीम्नः( म्नि ) स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्तास्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥ २३ ॥

अथ मध्या—

स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
निद्रां विधातुमविधातुमपि प्रपेदे ॥ २४ ॥

( भानुकरस्यैतौ )

अथ प्रौढा—

मदानने चुम्बनचञ्चलस्य प्रियस्य संस्पृष्टकुचस्थलस्य ।
नीवीषु भावी करसंनिवेशस्तद्वामनी यामिनि मैव भूयाः॥ २५ ॥

( लक्ष्मणस्य )

अथासती—

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलावनविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
स्मराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ २६ ॥

अथ विदग्धासती—

देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो
मातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते ।
दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा
वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ २७ ॥

( भानुकरस्यैतौ )

प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्यातनुते सपर्याम् ।
अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥२८॥
(कस्यापि)

अथ गुप्तासती—

श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्किंतु न मन्दिरे सखि पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥२९॥

अथ लक्षितासती—

कोकः स्तोकविमुक्तमौक्तिकभरो निःस्यन्दमिन्दीवरं
चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति ।
वातः कातरयत्यपाकृतरसं बन्धूकमेतावती
वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ३० ॥

अथ वेश्या—

केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाञ्जना
न्यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवः स्तनस्तिष्ठति ।
प्रेमच्छेदकृपाणवल्लिसुषमा रोमालिरालम्बते
यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ ३१ ॥

अथ कुलटा—

एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न वमन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जना-
न्धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ ३२ ॥

शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा ।
गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥३३॥

दिवसे घटिकास्त्रिंशत्त्रिंशद्घटिकाः परं रजनौ ।
लक्षं नगरयुवानस्तात विधातः किमाचरितम् ॥ ३४ ॥

प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्यातनुते सपर्याम् ।
अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥२८॥
(कस्यापि)

अथ **गुप्तासती**—

श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन्किंतु न मन्दिरे सखि पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥२९॥

अथ **लक्षितासती**—

कोकः स्तोकविमुक्तमौक्तिकभरो निःस्यन्दमिन्दीवरं
चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति ।
वातः कातरयत्यपाकृतरसं बन्धूकमेतावती
वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ३० ॥

अथ **वेश्या**—

केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाञ्जना
न्यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवः स्तनस्तिष्ठति ।
प्रेमच्छेदकृपाणवल्लिसुषमा रोमालिरालम्बते
यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ ३१ ॥

अथ **कुलटा**—

एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न वमन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जना-
न्धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ ३२ ॥

शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा ।
गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥३३॥

दिवसे घटिकास्त्रिंशत्त्रिंशद्घटिकाः परं रजनौ ।
लक्षं नगरयुवानस्तात विधातः किमाचरितम् ॥ ३४ ॥

स्थानं नास्ति क्षणं नास्ति वक्तारमिति सुभ्रुवः ।
जहास हारकूटेन पयोधरमहीधरः ॥ ३५ ॥

(भानुकरस्यैते)

दुर्दिवसे घनतिमिरे दुःसंचारासु नगरवीथीषु ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ ३६ ॥

(जघनचपलायाः)

अथ **कुलटोपदेशः**—

वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धान्परिणयविधीनां स्थितिरिति ।
त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना
न मे गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥ ३७ ॥

(कस्यापि)

नारीणां खलु बन्धुरन्धतमसं पाथोधरः सोदरः
कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः ।
इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते
तासामेव यशः सुधांशुधवलं तासां गृहे वृद्धयः ॥ ३८ ॥
चेत्पौरादपि शङ्कसे हिमरुचेरप्यर्चिषो लज्जसे
भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि ॥
चेत्कुञ्जादपि दूयसे जलरधध्वानादपि क्षुभ्यसि
प्रायः पुत्रि हतास्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ३९ ॥

(भानुकरस्यैतौ)

सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि ।
तुलयन्ति न लक्षांशं त्वारितक्षणचौर्यसुरतस्य ॥ ४० ॥

(कस्यापि)

एकानपाङ्गैरपरास्तरङ्गैर्भ्रुवोर्विलासैरितरं च हासैः ।
विमोहयत्यन्यमहो रहोभिः को वा कलां वेद कलावतीनाम् ॥ ४१ ॥

(लक्ष्मणस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट्टकृतायां** पद्यरचनायां सप्तमो व्यापारः ।

स्थानं नास्ति क्षणं नास्ति वक्तारमिति सुभ्रुवः ।
जहास हारकूटेन पयोधरमहीधरः ॥ ३५ ॥

(भानुकरस्यैते)

दुर्दिवसे घनतिमिरे दुःसंचारासु नगरवीथीषु ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ ३६ ॥

(जघनचपलायाः)

अथ **कुलटोपदेशः**—

वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धान्परिणयविधीनां स्थितिरिति ।
त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना
न मे गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥ ३७ ॥

(कस्यापि)

नारीणां खलु बन्धुरन्धतमसं पाथोधरः सोदरः
कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः ।
इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते
तासामेव यशः सुधांशुधवलं तासां गृहे वृद्धयः ॥ ३८ ॥

चेत्पौरादपि शङ्कसे हिमरुचेरप्यर्चिषो लज्जसे
भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि ॥
चेत्कुञ्जादपि दूयसे जलरधध्वानादपि क्षुभ्यसि
प्रायः पुत्रि हतास्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ३९॥

(भानुकरस्यैतौ)

सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि ।
तुलयन्ति न लक्षांशं त्वारितक्षणचौर्यसुरतस्य ॥ ४० ॥

(कस्यापि)

एकानपाङ्गैरपरास्तरङ्गैर्भ्रुवोर्विलासैरितरं च हासैः ।
विमोहयत्यन्यमहो रहोभिः को वा कलां वेद कलावतीनाम् ॥४१॥

(लक्ष्मणस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट्टकृतायां** पद्यरचनायां सप्तमो व्यापारः ।

अष्टमो व्यापारः ।

अथ **सौन्दर्यगर्विता**—

भामिन्यो विदधतु भागधेयभाजः केयूरं स्रजमवतंसमम्बुजातैः ।
धिग्दैवं मम तु विभूषणं विदूरे रोलम्बादधरनिवारणं पुमर्थः ॥ १ ॥

(कस्यापि)

अथ **प्रेमगर्विता**—

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमासि किं ब्रवीमि ।
सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः ॥ २ ॥

अथ **खण्डिता**—

वक्षोजखण्डितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किंचित् ।
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥ ३ ॥

अथ **कलहान्तरिता**—

चलं चेतः पुंसां सहजसरलाः पङ्कजदृशो
भवत्येव क्रोधः क्वचिदपि कदाचित्तरुणयोः ।
दहेदङ्गं भृङ्गी विधुरपि विदध्यात्परिभवं
स्मरो मां मथ्नीयादिति किमपि नाज्ञासिषमहम् ॥ ४ ॥

अकरोः क्रिमु नेत्रशोणिमानं किमकार्षीः करपद्मतर्जनम् ।
कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदष्टाः ॥ ५ ॥
विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा ।
इति कलहमधोमुखी सखीभ्यो लपितुमनालपितु समाचकाङ्क्ष ॥ ६ ॥

(भानुकरस्यैते)

अष्टमो व्यापारः ।

अथ **सौन्दर्यगर्विता**—

भामिन्यो विदधतु भागधेयभाजः केयूरं स्रजमवतंसमम्बुजातैः ।
धिग्दैवं मम तु विभूषणं विदूरे रोलम्बादधरनिवारणं पुमर्थः ॥ १ ॥

(कस्यापि)

अथ **प्रेमगर्विता**—

वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमासि किं ब्रवीमि ।
सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः ॥ २ ॥

अथ **खण्डिता**—

वक्षोजखण्डितमुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किंचित् ।
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥ ३ ॥

अथ **कलहान्तरिता**—

चलं चेतः पुंसां सहजसरलाः पङ्कजदृशो
भवत्येव क्रोधः क्वचिदपि कदाचित्तरुणयोः ।
दहेदङ्गं भृङ्गी विधुरपि विदध्यात्परिभवं
स्मरो मां मथ्नीयादिति किमपि नाज्ञासिषमहम् ॥ ४ ॥

अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपद्मतर्जनम् ।
कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदष्टाः ॥ ५ ॥
विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा ।
इति कलहमधोमुखी सखीभ्यो लपितुमनालपितु समाचकाङ्क्ष ॥ ६ ॥

(भानुकरस्यैते)

अथ दूती—

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किं च त्वयि यदुपते प्रस्थिते प्रस्थितैव ।
ब्रूमस्तस्याः किमिह धमनी वर्तते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ७ ॥
( भानुकरस्य )

न नीतमुपनासिकं परिमलव्ययाशङ्कया
न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि ।
दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं
करे कमलमर्पितं मृगदृशा दृशा पीयते ॥ ८ ॥
( अविलम्बस्य )

मुहुर्व्यजनवीजनैर्बहलचन्दनासेचनैः
सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी ।
परंतु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ९ ॥
( बाबूमिश्रस्य )

अथ दूत्युपहासः—

किं त्वं निगूहसे दूति स्तनौ वक्रं च पाणिना ।
खण्डिता एव शोभन्ते शूराधरपयोधराः ॥ १० ॥
( कस्यापि )

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ ११ ॥
( अमरुकस्य )

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् ।
किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ १२ ॥
( भानुकरस्य )

अथ दूती—

माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किं च त्वयि यदुपते प्रस्थिते प्रस्थितैव ।
ब्रूमस्तस्याः किमिह धमनी वर्तते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥ ७ ॥

( भानुकरस्य )

न नीतमुपनासिकं परिमलव्ययाशङ्कया
न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि ।
दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं
करे कमलमर्पितं मृगदृशा दृशा पीयते ॥ ८ ॥

( अविलम्बस्य )

मुहुर्व्यजनवीजनैर्बहलचन्दनासेचनैः
सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी ।
परंतु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ९ ॥

( बाबूमिश्रस्य )

अथ दूत्युपहासः—

किं त्वं निगूहसे दूति स्तनौ वक्त्रं च पाणिना ।
खण्डिता एव शोभन्ते शूराधरपयोधराः ॥ १० ॥

( कस्यापि )

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ ११ ॥

( अमरुकस्य )

त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् ।
किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ १२ ॥

( भानुकरस्य )

अथ **मानिनीमानः**—

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १३ ॥

( वामनस्य )

यदाभूदस्माकं प्रथममविभक्ता तनुरियं
ततो नु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ १४ ॥

( अमरुकस्य )

अथ **मानापनोदः**—

त्रियामायामस्यां सुतनु यमुनायामिव तर-
तरङ्गप्रोदञ्चद्विमलदलरक्तोत्पलमिव ।
इयं दृष्टिः शोणा मयि निहितकोणा विजयते
त्यज क्रोधं राधे मयि निरपराधे कुरु कृपाम् ॥ १५ ॥

( लक्ष्मणस्य )

**अथ परस्परप्रीतिप्रलापः ।**

तत्रादौ **नायिकायाः**—

सहस्रनेत्रैः प्रियगात्रशोभां विभावनीयां तु निभालयन्त्याः ।
किं लोचनाम्भोरुहयुग्मपत्रं विधाय धातः परिवञ्चितास्मि ॥ १६ ॥

( लक्ष्मणस्य )

अथ **नायकस्य**—

त्वदीयमुखपङ्कजं यदि विधोरलं वार्तया
तवाधरसुधा यदा भवति किं सुधा नो मुधा ।
त्वदङ्गपरिरम्भणं मण कृतं सुधागाहनै-
स्त्वदीयदृगनुग्रहस्तदपि धिग्धिगैन्द्रं पदम् ॥ १७ ॥

अथ **मानिनीमानः**—

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १३ ॥
( वामनस्य )

यदाभूदस्माकं प्रथममविभक्ता तनुरियं
ततो नु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ १४ ॥
( अमरुकस्य )

अथ **मानापनोदः**—

त्रियामायामस्यां सुतनु यमुनायामिव तर-
त्तरङ्गप्रोदञ्चद्विमलदलरक्तोत्पलमिव ।
इयं दृष्टिः शोणा मयि निहितकोणा विजयते
त्यज क्रोधं राधे मयि निरपराधे कुरु कृपाम् ॥ १५ ॥
( लक्ष्मणस्य )

## अथ परस्परप्रीतिप्रलापः ।

तत्रादौ **नायिकायाः**—

सहस्रनेत्रैः प्रियगात्रशोभां विभावनीयां तु निभालयन्त्याः ।
किं लोचनाम्भोरुहयुग्मपत्रं विधाय धातः परिवञ्चितास्मि ॥ १६ ॥
( लक्ष्मणस्य )

अथ **नायकस्य**—

त्वदीयमुखपङ्कजं यदि विधोरलं वार्तया
तवाधरसुधा यदा भवति किं सुधा नो मुधा ।
त्वदङ्गपरिरम्भणं मम कृतं सुधागाहनै-
स्त्वदीयदृगनुग्रहस्तदपि धिग्धिगैन्द्रं पदम् ॥ १७ ॥

दृश्यं चेन्मुखपङ्कजं तव यदि श्राव्यं तव व्याहृतं
घ्रेयं चेन्मुखसौरभं तव यदि स्वाद्यं तवौष्ठामृतम् ।
स्पृश्यं चेत्कुचयोर्युगं तव परं ध्येयं सुरूपं तव
त्वं सर्वेन्द्रियवागुरेव विषयः कस्येन्द्रियस्यासि न ॥ १८ ॥

लक्ष्मणस्यैतौ ।

अथ **रतप्रशंसा**—

नरैर्विफलजन्मभिर्गिरिदरी न किं सेव्यते
न चेच्छ्रवणगोचरीभवति जातुचिज्जन्मनि ।
कपोतरवमाधुरीविरचनानुकारा दरी-
रतासहकृशोदरीवचनरीतिकाकुध्वनिः ॥ १९ ॥

(लक्ष्मणस्य)

अथ **रतारम्भः**—

हस्तस्वेदस्नपित इव यश्चन्दनक्षोदवृन्दै-
रालिप्तोऽलंकृतपरिसरः फुल्लकह्लारहारैः ।
आराधीत्थं तव नवकुरङ्गाक्षि वक्षोजशम्भुः
साक्षात्कारं तदपि न दिशत्येष किं वा करोमि ॥ २० ॥
कान्ते नितान्तं दयिताकुचान्तचोलाञ्चलं कर्षति हर्षमुग्धे ।
बभार बाला नमितास्यहास्यलेशापदेशादपरं निचोलम् ॥ २१ ॥

(लक्ष्मणस्यैतौ)

उरोरुहाम्भोरुहदर्शनाय विमुञ्चतः कञ्चुकबन्धनानि ।
आनन्दनीराकुललोचनस्य प्रियस्य जातो विफलः प्रयासः ॥ २२ ॥
कान्ते कलितचोलान्ते दीपे वैरिणि दिप्यति ।
आसीदसितपद्माक्ष्याः पक्षो नयनमुद्रणम् ॥ २३ ॥

(भानुकरस्यैतौ)

दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेपितं वलयकैरथाक्रन्दितम् ।

दृश्यं चेन्मुखपङ्कजं तव यदि श्राव्यं तव व्याहृतं
घ्रेयं चेन्मुखसौरभं तव यदि स्वाद्यं तवौष्ठामृतम् ।
स्पृश्यं चेत्कुचयोर्युगं तव परं ध्येयं सुरूपं तव
त्वं सर्वेन्द्रियवागुरेव विषयः कस्येन्द्रियस्यासि न॥ १८ ॥

लक्ष्मणस्यैतौ ।

अथ **रतप्रशंसा**—

नरैर्विफलजन्मभिर्गिरिदरी न किं सेव्यते
न चेच्छ्रवणगोचरीभवति जातुचिज्जन्मनि ।
कपोतरवमाधुरीविरचनानुकारा दरी-
रतासहकृशोदरीवचनरीतिकाकुध्वनिः ॥ १९ ॥

(लक्ष्मणस्य)

अथ **रतारम्भः**—

हस्तस्वेदस्नपित इव यश्चन्दनक्षोदवृन्दै-
रालिप्तोऽलंकृतपरिसरः फुल्लकह्लारहारैः ।
आराधीत्थं तव नवकुरङ्गाक्षि वक्षोजशम्भुः
साक्षात्कारं तदपि न दिशत्येष किं वा करोमि ॥ २० ॥
कान्ते नितान्तं दयिताकुचान्तचोलाञ्चलं कर्षति हर्षमुग्धे ।
बभार बाला नमितास्यहास्यलेशापदेशादपरं निचोलम् ॥ २१ ॥

(लक्ष्मणस्यैतौ)

उरोरुहाम्भोरुहदर्शनाय विमुञ्चतः कञ्चुकबन्धनानि ।
आनन्दनीराकुललोचनस्य प्रियस्य जातो विफलः प्रयासः ॥ २२ ॥
कान्ते कलितचोलान्ते दीपे वैरिणि दिप्यति ।
आसीदसितपद्माक्ष्याः पक्षो नयनमुद्रणम् ॥ २३ ॥

(भानुकरस्यैतौ)

दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेपितं वलयकैरथाक्रन्दितम् ।

प्रियेण हरिणीदृशो दशनखण्ड्यमानेऽधरे
परव्यसनकातराः किमिव कुर्वतां साधवः ॥ २४ ॥
(कस्यापि)

अथ रतम्—

आकाशे नटनं सरोरुहयुगे मञ्जीरमञ्जुध्वनिः
शीतांशौ कलकूजितं किसलये पीयूषपानोत्सवः ।
स्वर्णक्षोणिधरे नखात्परिभवो ध्वान्ते कराकर्षणं
रम्भायां रसना रवस्तरुणयोः पुण्यानि मन्यामहे ॥ २५ ॥

हारस्त्रुट्यति कङ्कणं निपतति सत्कौमुदी क्लिश्यति
ध्वान्तं धावति सीत्करोति रजनीजानिर्वली भज्यति (?) ।
काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षतं चञ्चति
प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥ २६ ॥
(भानुकरस्यैतौ)

संन्यासमाय काञ्ची जहौ दुकूलं कलत्रमबलायाः ।
विससर्ज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥ २७ ॥
(कस्यापि)

नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं
शक्ता नैनां चपल नितरां खेदयेन्दीवराक्षीम् ।
रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा
कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥ २८ ॥
(धूर्तस्य)

रतिरभसनितान्तश्रान्तकान्ताकुचान्त-
श्चलदमलकराग्रा नाभिदेशेष्वधो वा ।
स्मितमधुरमुखीनां ह्रीणनेत्रोत्पलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २९ ॥
(शार्ङ्गधरस्य)

प्रियेण हरिणीदृशो दशनखण्ड्यमानेऽधरे
परव्यसनकातराः किमिव कुर्वतां साधवः ॥ २४ ॥
(कस्यापि)

अथ रतम्—

आकाशे नटनं सरोरुहयुगे मञ्जीरमञ्जुध्वनिः
शीतांशौ कलकूजितं किसलये पीयूषपानोत्सवः ।
स्वर्णक्षोणिधरे नखात्परिभवो ध्वान्ते कराकर्षणं
रम्भायां रसना रवस्तरुणयोः पुण्यानि मन्यामहे ॥ २५ ॥

हारस्त्रुट्यति कङ्कणं निपतति सत्कौमुदी क्लिश्यति
ध्वान्तं धावति सीत्करोति रजनीजानिर्वली भज्यति (?) ।
काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षतं चञ्चति
प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥ २६ ॥
(भानुकरस्यैतौ)

संन्यासमाय काञ्ची जहौ दुकूलं कलत्रमबलायाः ।
बिससर्ज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥ २७ ॥
(कस्यापि)

नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं
शक्ता नैनां चपल नितरां खेदयेन्दीवराक्षीम् ।
रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा
कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥ २८ ॥
(धूर्तस्य)

रतिरभसनितान्तश्रान्तकान्ताकुचान्त-
श्चलदमलकराग्रा नाभिदेशेष्वधो वा ।
सितमधुरमुखीनां ह्रीणनेत्रोत्पलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २९ ॥
(शार्ङ्गधरस्य)

मज्जन्त्या रससिन्धौ किं किं न कृतं तया सुदृशा ।
विधृताः प्रियस्य केशाः कण्ठे लग्नं भुजे वलितम् ॥ ३० ॥

(वाणीविलासस्य)

पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्यापि न किंचिदूचे ।
कलावती किंतु विहस्य तस्य कपोलयोः खेदमपाचकार ॥ ३१ ॥

(रामचन्द्रस्य)

अथ विपरीतम्—

प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनिः ।
कान्ते नूनं रतश्रान्ते कामिनी पुरुषायते ॥ ३२ ॥

(कस्यापि)

विहायसि विहारिणी भवतु नाम सौदामनी
सुमेरुशिखरादधः पततु नाम मन्दाकिनी ।
इदं तु महदद्भुतं यदयमेत्य भूमीतलं
नमन्नमृतदीधितिः कमलसारमाकर्षति ॥ ३३ ॥

(कस्यापि)

मधुपानसमुल्लसत्प्रवालं चलहेमाचलकान्तिभिर्जटालम् ।
विधुनिष्पतदन्धकारजालं शुभकालं न पुनर्विलोकयामः ॥ ३४ ॥
साक्षादभूत्स्वयंभूरथ मुक्तास्तिमिरनिकरभराः ।
प्रणनाम शीतरोचिःस्तवपाठं मेखला विदधे ॥ ३५ ॥

(भानुकरस्यैतौ)

पपात मेरोः सुरसिन्धुधारा ववर्ष तारागणमन्धकारः ।
बभूव भृङ्गावलिरप्यकम्पा शशाम शम्पालतिकाविलासः ॥ ३६ ॥

(कवीन्द्रस्य)

वलत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् ।
पुण्यातिरेकात्पुरुषा लभन्ते पुंभावसम्भोरुहलोचनानाम् ॥ ३७ ॥

(कस्यापि)

मज्जन्त्या रससिन्धौ किं किं न कृतं तया सुदृशा ।
विधृताः प्रियस्य केशाः कण्ठे लग्नं भुजे वलितम् ॥ ३० ॥

(वाणीविलासस्य)

पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्यापि न किंचिदूचे ।
कलावती किंतु विहस्य तस्य कपोलयोः स्वेदमपाचकार ॥ ३१ ॥

(रामचन्द्रस्य)

अथ विपरीतम्—

प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनिः ।
कान्ते नूनं रतश्रान्ते कामिनी पुरुषायते ॥ ३२ ॥

(कस्यापि)

विहायसि विहारिणी भवतु नाम सौदामनी
सुमेरुशिखरादधः पततु नाम मन्दाकिनी ।
इदं तु महदद्भुतं यदयमेत्य भूमीतलं
नमन्नमृतदीधितिः कमलसारमाकर्षति ॥ ३३ ॥

(कस्यापि)

मधुपानसमुल्लसत्प्रवालं चलहेमाचलकान्तिभिर्जटालम् ।
विधुनिष्पतदन्धकारजालं शुभकालं न पुनर्विलोकयामः ॥ ३४ ॥
साक्षादभूत्स्वयंभूरथ मुक्तास्तिमिरनिकरभराः ।
प्रणनाम शीतरोचिःस्तवपाठं मेखला विदधे ॥ ३५ ॥

(भानुकरस्यैतौ)

पपात मेरोः सुरसिन्धुधारा ववर्ष तारागणमन्धकारः ।
बभूव भृङ्गावलिरप्यकम्पा शशाम शम्पालतिकाविलासः ॥ ३६ ॥

(कवीन्द्रस्य)

वलत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् ।
पुण्यातिरेकात्पुरुषा लभन्ते पुंभावसम्भोरुहलोचनानाम् ॥ ३७ ॥

(कस्यापि)

पपात गङ्गा हरमौलिसङ्गादन्धं तमो जातमपेतबन्धम् ।
तडिल्लता चञ्चलतामहासीदस्पन्दमासीदरविन्दयुग्मम् ॥ ३८ ॥
(रामचन्द्रस्य)

अथ रतावसानम्—

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरयुगे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ ३९ ॥
(भर्तृहरेः)

शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती
वासोदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम् ।
बिम्बोष्ठस्य च वीटिकां सुनयना पद्भ्यां रणन्नूपुरौ
पृष्ठालम्बिनि केशपाशनिचये युक्तोऽभिबन्धक्रमः ॥ ४० ॥
(कस्यापि)

कामसंगरविधौ मृगीदृशः प्रौढपौरुषधरे पयोधरे ।
स्वेदराजिरुदियाय सर्वतः पुष्पवृष्टिरिव पुष्पधन्वनः ॥ ४१ ॥

अथ रताशंसनम्—

उक्तं यत्कृपणं वचो विरचितो भूयान्वसूनां व्ययः
सोढाः किं च वियोगवज्रततयो दूती मुहुः प्रेषिता ।
बद्धोऽयं प्रणयाञ्जलिर्विनिहिते बाष्पाम्बुधौते दृशौ
निष्पीयाधरपल्लवं मृगदृशः सर्वं सखे विस्मृतम् ॥ ४२ ॥
(भानुकरस्यैतौ)

अथ रतनिद्रा—

मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम् ।
तौ ततोऽनु परिरम्भसंपुटे पीडना विदधतौ निनिद्रतुः ॥ ४३ ॥
(श्रीहर्षस्य)

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां पद्यरचनायामष्टमो व्यापारः ॥

१. सुभाषितावली तु 'पाण्योरणत्कङ्कणौ' इति पाठः.

पपात गङ्गा हरमौलिसङ्गादन्धं तमो जातमपेतबन्धम् ।
तडिल्लता चञ्चलतामहासीदस्पन्दमासीदरविन्दयुग्मम् ॥ ३८ ॥
(रामचन्द्रस्य)

अथ रतावसानम्—
मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरयुगे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ ३९ ॥
(भर्तृहरेः)

शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती
वासोदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम् ।
बिम्बोष्ठस्य च वीटिकां सुनयना पद्भ्यां रणन्नूपुरौ
पृष्ठालम्बिनि केशपाशनिचये युक्तोऽभिबन्धक्रमः ॥ ४० ॥
(कस्यापि)

कामसंगरविधौ मृगीदृशः प्रौढपौरुषधरे पयोधरे ।
स्वेदराजिरुदियाय सर्वतः पुष्पवृष्टिरिव पुष्पधन्वनः ॥ ४१ ॥

अथ रताशंसनम्—
उक्तं यत्कृपणं वचो विरचितो भूयान्वसूनां व्ययः
सोढाः किं च वियोगवज्रततयो दूती मुहुः प्रेषिता ।
बद्धोऽयं प्रणयाञ्जलिर्विनिहिते बाष्पाम्बुधौते दृशौ
निष्पीयाधरपल्लवं मृगदृशः सर्वं सखे विस्मृतम् ॥ ४२ ॥
(भानुकरस्यैतौ)

अथ रतनिद्रा—
मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम् ।
तौ ततोऽनु परिरम्भसंपुटे पीडना विदधतौ निनिद्रतुः ॥ ४३ ॥
(श्रीहर्षस्य)

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां पद्यरचनायामष्टमो व्यापारः ॥

१. सुभाषितावली तु 'पाण्यो रणत्कङ्कणौ' इति पाठः.

नवमो व्यापारः ।

**अथ प्रभातानुनयः—**

गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ १ ॥

क्षीणांशुः शशलाञ्छनः शशिमुखि क्षीणो न कोपस्तव
स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम् ।
पीतं श्रोत्रपुटेन षट्पदरुतं पीतं न ते जल्पितं
रक्ता पूर्वदिगङ्गना रविकरैर्नाद्यापि रक्तासि किम् ॥ २ ॥

(कस्याप्येतौ)

**अथ वायुः—**

उत्सार्य कुन्तलमपास्य दुकूलमूल-
मुन्नाम्य बाहुलतिकामलसास्तरुण्यः ।
स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै
तस्मै नमः सुकृतिने मलयानिलाय ॥ ३ ॥

वासो विधूय स्तनयोरमुष्याः
कपोलकीर्णां कबरीमुदस्य ।
अवारितः प्रोञ्छति वारिधारां
मुखे मृगाक्ष्याः सुकृती समीरः ॥ ४ ॥

झञ्झानिलोऽपि सुरतान्तनितान्ततान्त-
कान्ताकुचान्तघनघर्ममपाकरोति ।
भूयोऽभिलाषजननी पुनरन्यथैव
स्वेदापनोदनकला मलयानिलस्य ॥ ५ ॥

भिक्षितकमलकुटुम्बाः शिक्षितगजगामिनीगतयः ।
लक्षितहिमगिरिपादाः प्रातरमी मातरिश्वानः ॥ ६ ॥

नवमो व्यापारः ।

अथ **प्रभातानुनयः**—

गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ १ ॥

क्षीणांशुः शशलाञ्छनः शशिमुखि क्षीणो न कोपस्तव
स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम् ।
पीतं श्रोत्रपुटेन षट्पदरुतं पीतं न ते जल्पितं
रक्ता पूर्वदिगङ्गना रविकरैर्नाद्यापि रक्तासि किम् ॥ २ ॥

(कस्याप्येतौ)

अथ **वायुः**—

उत्सार्य कुन्तलमपास्य दुकूलमूल-
मुन्नाम्य बाहुलतिकामलसास्तरुण्यः ।
स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै
तस्मै नमः सुकृतिने मलयानिलाय ॥ ३ ॥

वासो विधूय स्तनयोरमुष्याः
कपोलकीर्णां कबरीमुदस्य ।
अवारितः प्रोञ्छति वारिधारां
मुखे मृगाक्ष्याः सुकृती समीरः ॥ ४ ॥

झञ्झानिलोऽपि सुरतान्तनितान्तदान्त-
कान्ताकुचान्तघनघर्ममपाकरोति ।
भूयोऽभिलाषजननी पुनरन्यथैव
खेदापनोदनकला मलयानिलस्य ॥ ५ ॥

भिक्षितकमलकुटुम्बाः शिक्षितगजगामिनीगतयः ।
लक्षितहिमगिरिपादाः प्रातरमी मातरिश्वानः ॥ ६ ॥

पद्यरचना।




लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिणि।
पुनः संपर्कशङ्कीव मन्दं चरति मारुतः ॥ ७ ॥
लवङ्गलतिकाभङ्गदयालुर्दक्षिणानिलः।
कथमुन्मूलयत्येष मानिनीमानपर्वतान् ॥ ८ ॥

(केषामप्येते)

चोलाङ्गनाकुचनिचोलतलानुलीनो
द्राक्केरलीतरलकुन्तलकम्पनोत्कः(लोलः)।
लाटीललाटतटशोषणमानसोऽयं
फुल्लारविन्दवनबन्धुरुपैति वायुः ॥ ९ ॥

(लक्ष्मणस्य)

अथ प्रभातम्—

विरलविरलीभूतास्तारा: कलौ सुजना इव
व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः।
मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो
विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ १० ॥
अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि।
क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥ ११ ॥

(भोजप्रबन्धात्)

अयमुदयमहीभृन्मूर्ध्नि पाणिं गृहीत्वा
दिवसपतिरहौषीदिन्दुपादान्हवींषि।
अरुणकिरणवह्नौ कन्यका पौरुहूती
हरिदपि किमकार्षीत्तारकालाजहोमम् ॥ १२ ॥
संनिगृह्य चिकुरं तमोमयं यामिनी तदनु केलिविच्युतम्।
कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकुञ्जमुज्झति ॥ १३ ॥

(भानुकरस्यैतौ)




लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिणि ।
पुनः संपर्कशङ्कीव मन्दं चरति मारुतः ॥ ७ ॥
लवङ्गलतिकाभङ्गदयालुर्दक्षिणानिलः ।
कथमुन्मूलयत्येष मानिनीमानपर्वतान् ॥ ८ ॥

(केषामप्येते)

चोलाङ्गनाकुचनिचोलतलानुलीनो
 द्राक्केरलीतरलकुन्तलकम्पनोत्कः(लोलः) ।
लाटीललाटतटशोषणमानसोऽयं
 फुल्लारविन्दवनबन्धुरुपैति वायुः ॥ ९ ॥

(लक्ष्मणस्य)

अथ **प्रभातम्**—

विरलविरलीभूतास्ताराः कलौ सुजना इव
 व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः ।
मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो
 विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ १० ॥
अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं
 गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा
 न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥ ११ ॥

(भोजप्रबन्धात्)

अयमुदयमहीभृन्मूर्ध्नि पार्णिं गृहीत्वा
 दिवसपतिरहौषीदिन्दुपादान्हवींषि ।
अरुणकिरणवह्नौ कन्यका पौरुहूती
 हरिदपि किमकार्षीत्तारकालाजहोमम् ॥ १२ ॥
संनिगृह्य चिकुरं तमोमयं यामिनी तदनु केलिविच्युतम् ।
कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकुञ्जमुज्झति ॥ १३ ॥

(भानुकरस्यैतौ)

कोकानुद्ग्रीवयन्तः पथि पथि कुलटामानसं कम्पयन्तः
प्रस्थातारं विभाते प्रियतममबला गाढमालिङ्गयन्तः ।
उत्थातुं चाङ्गभङ्गीः कुलकमलदृशां कारयन्तो निशान्ते
कूंकाराः कुकुटानां मधुमधुरसमारम्भगम्भीरधीराः ॥ १४ ॥
वृन्देन तारावलितन्दुलानामङ्केन च श्रीफलपल्लवेन ।
अभ्यर्च्य जोगेश्वरमिन्दुबिम्बं विसर्जयत्येष नभो मुनीन्द्रः ॥ १५ ॥
(एतौ गणपतेः)

अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री
मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ १६ ॥
(माघस्य)

वियोगार्तिमलिन्याः किं नलिन्या नलिनीधवः ।
करैर्निःसारयांचक्रे दुःखशल्यमलिच्छलात् ॥ १७ ॥
(लक्ष्मणस्य)

अथ मध्याह्नः—

दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे ।
छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ १८ ॥
(अवन्तिवर्मणः)

मध्याह्नमीयुषि रवौ बत पादपस्य
छायाभितापभयतो भजते द्रुमूलम् ।
संदृश्य ..........................................
.......................................................... ॥ १९ ॥

मध्याह्ने नूनमापीडेऽपि तिग्मतापोपशान्तये ।
दधुः कमलिनीपत्त्रमातपत्रमिवोपरि ॥ २० ॥
(रामचन्द्रस्यैतौ)

१. अत्रावलामिरिति भाव्यम्. २. शिवम्.

कोकानुद्ग्रीवयन्तः पथि पथि कुलटामानसं कम्पयन्तः

प्रस्थातारं विभाते प्रियतममबला गाढमालिङ्गयन्तः ।

उत्थातुं चाङ्गभङ्गीः कुलकमलदृशां कारयन्तो निशान्ते

कूंकाराः कुक्कुटानां मधुमधुरसमारम्भगम्भीरधीराः ॥ १४ ॥

वृन्देन तारावलितन्दुलानामङ्केन च श्रीफलपल्लवेन ।

अभ्यर्च्य जोगेश्वरमिन्दुबिम्बं विसर्जयत्येष नभो मुनीन्द्रः ॥ १५ ॥

( एतौ गणपतेः )

अनुनयमगृहीत्वा व्याजसुप्ता पराची

रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये ।

कथमपि परिवृत्ता निद्रयान्धा किल स्त्री

मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ १६ ॥

( माघस्य )

वियोगार्तिमलिन्याः किं नलिन्या नलिनीधवः ।

करैर्निःसारयांचक्रे दुःखशल्यमलिच्छलात् ॥ १७ ॥

( लक्ष्मणस्य )

**अथ मध्याह्नः—**

दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे ।

छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ १८ ॥

( अवन्तिवर्मणः )

मध्याह्नमीयुषि रवौ बत पादपस्य

छायाभितापभयतो भजते द्रुमूलम् ।

संदृश्य ..............................

.................................... ॥ १९ ॥

मध्याह्ने नूनमापीडपि तिग्मतापोपशान्तये ।

दधुः कमलिनीपत्रमातपत्रमिवोपरि ॥ २० ॥

( रामचन्द्रस्यैतौ )

१. अत्रावलामिरिति भाव्यम्. २. शिवम्.

अस्वाध्यायः पिकानां मदनमखसमारम्भणस्याभिमासो
निद्राया जन्मलग्नं किमपि मधुलिहां कोऽपि दुर्भिक्षकालः ।
विघ्नर्यात्रोत्सुकानां मलयजमरुतां पान्थकान्ताकृतान्तः
प्रालेयोन्मूलमूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥ २१ ॥
(वाहिनीपतेः)

वहद्दहनमारुतप्रसरदग्निखण्डैरिव
स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिता ।
विसारि वपुरात्मनः सपदि वासरश्रीरिमं
ज्वलन्मरुमरीचिकानिचयपल्लवेनाञ्चति ॥ २२ ॥
भानोः पादैर्दहनपरुषैर्दह्यमानान्तराणा-
मुत्कासन्तः किल विटपिनां प्राणपिण्डा इवामी ।
गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः
कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥ २३ ॥
(एतौ गणपतेः)

अथ जलक्रीडा—

अंसेन कर्णं चिबुकेन वक्षः करद्वयेनाक्षि तिरोदधानः ।
संताडयामास हरिः समेताश्चकोरनेत्राश्चुलुकोदकेन ॥ २४ ॥
परस्पराश्लेषवशंगतानि द्वन्द्वानि ········ विहस्य काचित् ।
संताड्य पद्मैः स्खलदंशुकान्ता कृष्णाय कान्ता कथयांबभूव ॥२५॥
ह्रिया सखीनां हरिरम्बुजाक्षीं गिरा परावर्तयितुं न सेहे ।
अनङ्गलेखाक्षरसंगतेन संताडयामास सरोरुहेण ॥ २६ ॥
(गणपतेरेतौ)

आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।
अञ्जलौ जलमधीरलोचना ································ ॥ २७ ॥

अविरतमिदमम्भः स्वेच्छयोच्छालयन्त्या
कमलमुकुलकान्तोत्तानहस्तद्वयेन ।

अस्वाध्यायः पिकानां मदनमखसमारम्भणस्याभिमासो
निद्राया जन्मलग्नं किमपि मधुलिहां कोऽपि दुर्भिक्षकालः ।
विधिर्यात्रोत्सुकानां मलयजमरुतां पान्थकान्ताकृतान्तः
प्रालेयोन्मूलमूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥ २१ ॥
(वाहिनीपतेः)

वहद्धदहलमारुतप्रसरदग्निखण्डैरिव
स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिता ।
विसारि वपुरात्मनः सपदि वासरश्रीरिमं
चलन्मरुमरीचिकानिचयपल्लवेनाञ्चति ॥ २२ ॥

भानोः पादैर्दहनपरुषैर्दह्यमानान्तराणा-
मुत्कासन्नः किल विटपिनां प्राणपिण्डा इवामी ।
गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः
कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥ २३ ॥
(एतौ गणपतेः)

अथ जलक्रीडा—

अंसेन कर्णं चिबुकेन वक्षः करद्वयेनाक्षि तिरोदधानः ।
संताडयामास हरिः समेताश्चकोरनेत्राश्चुलुकोदकेन ॥ २४ ॥

परस्पराश्लेषवशंगतानि द्वन्द्वानि ······ विहस्य काचित् ।
संताड्य पद्मैः स्खलदंशुकान्ता कृष्णाय कान्ता कथयांबभूव ॥२५॥

ह्रिया सखीनां हरिरम्बुजाक्षीं गिरा परावर्तयितुं न सेहे ।
अनङ्गलेखाक्षरसंगतेन संताडयामास सरोरुहेण ॥ २६ ॥
(गणपतेरेतौ)

आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।
अञ्जलौ जलमधीरलोचना ······························ ॥ २७ ॥

अविरतमिदमस्मः स्वेच्छयोच्छालयन्त्या
कमलमुकुलकान्तोत्तानहस्तद्वयेन ।

परिकलित इवार्घः कामबाणातिथिभ्यः
सलिलमिव वितीर्णं बाललीलासुखाय ॥ २८ ॥
(कस्यापि)

अथ वनक्रीडा—

पतितैः शिरीषरजसां निकरैः कलुषीकृतं नयननीररुहम् ।
हरिणा हिरण्यरमणीयतनोर्मुखमारुतैः किमपि शीतलितम् ॥ २९॥
अबलाकृतिं समुपकल्प्य शनैर्व्रजता ................ ।
कपटेन कैटभजिता हसता वनिता धृता करसरोरुहयोः ॥ ३० ॥
(भानुकरस्यैतौ)

असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति ।
एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ ३१ ॥
(बिह्लणस्य)

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कबरीभरे निजकुले व्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ ३२ ॥
(अचलस्य)

रम्भोरु देहपरिरम्भभरैस्त्वदीयै-
र्यन्मानसं विकृतिमेति न चित्रमेतत् ।
त्वत्पादपद्मलवसङ्गवशादशोको
रोमाञ्चमञ्चति दलत्कलिकाछलेन ॥ ३३ ॥
(लक्ष्मणस्य)

अथ भ्रमरीनृत्यक्रीडा—

भ्रमात्प्रकीर्णे भ्रमरीषु किंचिच्चेलाञ्चले चञ्चललोचनानाम् ।
कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णाम् ॥३४॥
परिभ्रमन्त्या भ्रमरीविनोदे नितम्बबिम्बाद्विगलद्दुकूलम् ।

परिकलित इवार्घः कामबाणातिथिभ्यः
सलिलमिव वितीर्णं बाललीलासुखाय ॥ २८ ॥
(कस्यापि)

अथ वनक्रीडा—

पतितैः शिरीषरजसां निकरैः कलुषीकृतं नयननीररुहम्।
हरिणा हिरण्यरमणीयतनोर्मुखमारुतैः किमपि शीतलितम् ॥ २९॥
अबलाकृतिं समुपकल्प्य शनैर्व्रजता ................ ।
कपटेन कैटभजिता हसता वनिता धृता करसरोरुहयोः ॥ ३० ॥
(भानुकरस्यैतौ)

असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति।
एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ ३१ ॥
(बिह्लणस्य)

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे।
लीयन्ते कबरीभरे निजकुले व्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ ३२ ॥
(अचलस्य)

रम्भोरु देहपरिरम्भभरैस्त्वदीयै-
र्यन्मानसं विकृतिमेति न चित्रमेतत्।
त्वत्पादपद्मलवसङ्गवशादशोको
रोमाञ्चमञ्चति दलत्कलिकाछलेन ॥ ३३ ॥
(लक्ष्मणस्य)

अथ भ्रमरीनृत्यक्रीडा—

भ्रमात्प्रकीर्णे भ्रमरीषु किंचिच्चेलाञ्चले चञ्चललोचनानाम्।
कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णाम् ॥३४॥
परिभ्रमन्त्या भ्रमरीविनोदे नितम्बबिम्बाद्विगलद्दुकूलम्।

विलोक्य कस्याश्चन कोमलाङ्ग्याः पुंभावमन्याः सुदृशो ववाञ्छुः॥३५॥

(गुणाकरस्यैतौ)

चेलाञ्चलेन चलहारलताप्रकाण्डै-
वेंणीगुणेन च चलद्वलयीकृतेन ।
हेलाहितभ्रमरकभ्रममण्डलीभि-
श्छत्रत्रयं रचयतीव चिरं नतभ्रूः ॥ ३६ ॥

मुक्ते काञ्चनकुण्डले निपतिते माणिक्यभूषामणौ
कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति ।
निःश्वस्याम्बुजलोचना भ्रमरिकानृत्यावसाने पुनः
प्राणेशच्युतिशङ्कयेव हृदये हस्तारविन्दं ददौ ॥ ३७ ॥

अलक्षितकुचाभोगं भ्रमन्ती नृत्यभूमिषु ।
स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ ३८ ॥

(एतौ भानुकरस्य)

अथ **कन्दुकक्रीडा**—

सानन्दकन्दुकविहारविधौ वधूनां
दोलायमानमणिकङ्कणनिक्कणेन ।
उड्डायितेषु युवचित्तविहङ्गमेषु
श्येना इव स्मृतिभुवो विशिखा विलग्नाः ॥ ३९ ॥

भ्रमच्चरणपल्लवक्कणदमन्दमञ्जीरकं
परिस्खलदुरोरुहस्तबककम्पमानांशुकम् ।
रणत्कनकमेखलं करसरोरुहाभ्यां पुरः
पतन्तमपराददे कुसुमकन्दुकं सुन्दरी ॥ ४० ॥

(एतौ गणपतेः)

पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः ।
इतीव नेत्राकृति भीतमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥ ४१ ॥

(कालिदासस्य)

विलोक्य कस्याश्चन कोमलाङ्ग्याः पुंभावमन्याः सुदृशो ववाञ्छुः॥३५॥

(गुणाकरस्यैतौ)

चेलाञ्चलेन चलहारलताप्रकाण्डै-
वेणीगुणेन च चलद्वलयीकृतेन ।
हेलाहितभ्रमरकभ्रममण्डलीभि-
श्छत्रत्रयं रचयतीव चिरं नतभ्रूः ॥ ३६ ॥

मुक्ते काञ्चनकुण्डले निपतिते माणिक्यभूषामणौ
कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति ।
निःश्वस्याम्बुजलोचना भ्रमरिकानृत्यावसाने पुनः
प्राणेशच्युतिशङ्कयेव हृदये हस्तारविन्दं ददौ ॥ ३७ ॥

अलक्षितकुचाभोगं भ्रमन्ती नृत्यभूमिषु ।
स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ ३८ ॥

(एतौ भानुकरस्य)

अथ **कन्दुकक्रीडा**—

सानन्दकन्दुकविहारविधौ वधूनां
दोलायमानमणिकङ्कणनिक्वणेन ।
उड्डायितेषु युवचित्तविहङ्गमेषु
श्येना इव स्मृतिभुवो विशिखा विलग्नाः ॥ ३९ ॥

भ्रमच्चरणपल्लवक्वणदमन्दमञ्जीरकं
परिस्खलदुरोरुहस्तबककम्पमानांशुकम् ।
रणत्कनकमेखलं करसरोरुहाभ्यां पुरः
पतन्तमपराददे कुसुमकन्दुकं सुन्दरी ॥ ४० ॥

(एतौ गणपतेः)

पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः ।
इतीव नेत्राकृति भीतमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥ ४१ ॥

(कालिदासस्य)

अथ दृङ्मीलनक्रीडा—

नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ
सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् ।
इत्थं बालतया सखीभिरसकृद्दृङ्मीलनाकेलिषु
व्या(षि)द्धा रजनीमुखे च नयने स्वे गर्हते कन्यका ॥ ४२ ॥

(कस्यापि)

एनं विहाय तुलसीविपिनोपकण्ठं
गोप्यः परत्र नयनाम्बुजमीलनानि ।
कुर्वन्तु किंतु तुलसीदलनीलभासं
का वा मुकुन्दमनुविन्दतु लीनमस्मिन् ॥ ४३ ॥

(लक्ष्मणस्य)

अथ हिन्दोलक्रीडा—

दृशा विदधिरे दिशः कमलराजिनीराजिताः
कृता हसितरोचिषा हरिति चन्द्रिकावृष्टयः ।
अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुर-
द्वपुर्विपुलरोचिषा वियति विद्युतां विभ्रमः ॥ ४४ ॥

(गणपतेः)

उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः ।
दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥ ४५ ॥

(बिह्लणस्य)

दोलायमानाः प्रियनुद्यमानहिन्दोलया बालचमूरुनेत्राः ।
प्रसारिदेहद्युतिवारिपूरे वितेनिरे विप्लवनानि भूयः ॥ ४६ ॥

(गदाधरस्य)

अथ संध्या—

अस्ताद्रिलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।

अथ दृङ्मीलनक्रीडा—

नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ
सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् ।
इत्थं बालतया सखीभिरसकृद्दृङ्मीलनाकेलिषु
व्या(षि)द्धा रजनीमुखे च नयने स्वे गर्हते कन्यका ॥ ४२ ॥
(कस्यापि)

एनं विहाय तुलसीविपिनोपकण्ठं
गोप्यः परत्र नयनाम्बुजमीलनानि ।
कुर्वन्तु किंतु तुलसीदलनीलभासं
का वा मुकुन्दमनुविन्दतु लीनमस्मिन् ॥ ४३ ॥
(लक्ष्मणस्य)

अथ हिन्दोलक्रीडा—

दृशा विदधिरे दिशः कमलराजिनीराजिताः
कृता हसितरोचिषा हरिति चन्द्रिकावृष्टयः ।
अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुर-
द्वपुर्विपुलरोचिषा वियति विद्युतां विभ्रमः ॥ ४४ ॥
(गणपतेः)

उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः ।
दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥ ४५ ॥
(बिह्लणस्य)

दोलायमानाः प्रियनुद्यमानहिन्दोलया बालचमूरुनेत्राः ।
प्रसारिदेहद्युतिवारिपूरे वितेनिरे विप्लवनानि भूयः ॥ ४६ ॥
(गदाधरस्य)

अथ संध्या—

अस्ताद्रिलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।

संध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥ ४७ ॥
(रत्नाकरस्य)

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य संध्यारजोराजिरिवोज्जिहीते ॥ ४८ ॥
(श्रीहर्षस्य)

प्रकटयति वियोगिप्रेयसीविप्रतीपो
भुवनविजययात्राडम्बरं शम्बरारिः ।
यदिह जयति संध्याकैतवेनासमन्ता-
दरुणवसनलेखा काचिदेषा लसन्ती ॥ ४९ ॥
मृगाङ्कमागतं वीक्ष्य संध्या कुलवधूरिव ।
दीपलेखामिषादेषा निर्विवेश निकेतनम् ॥ ५० ॥
(भानुकरस्य)

**अथान्धकारः—**

चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना ।
मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमांसि शैवलानि ॥ ५१ ॥
(भानुकरस्य)

इदं नभसि भीषणभ्रमदुलूककोलाहलै-
र्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् ।
परिस्फुरति निर्मलप्रचुरपङ्कमग्नोल्लस-
द्वराहकुलमांसलप्रबलबन्धमन्धं तमः ॥ ५२ ॥
(वासुदेवस्य)

**अथाभिसारिका—**

गाढे तमसि सरन्ती पथि स्खलन्ती सुपिच्छले मुग्धा ।
अवलम्बनाय चाराद्धारासु करं प्रसारयति ॥ ५३ ॥
चित्रोत्कीर्णादपि विषधराद्भीतिभाजो निशायां
किं नु ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः ।

संध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥ ४७ ॥
(रत्नाकरस्य)

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य संध्यारजोराजिरिवोज्जिहीते ॥ ४८ ॥
(श्रीहर्षस्य)

प्रकटयति वियोगिप्रेयसीविप्रतीपो
भुवनविजययात्राडम्बरं शम्बरारिः ।
यदिह जयति संध्याकैतवेनासमन्ता-
दरुणवसनलेखा काचिदेषा लसन्ती ॥ ४९ ॥
मृगाङ्कमागतं वीक्ष्य संध्या कुलवधूरिव ।
दीपलेखामिषादेषा निर्विवेश निकेतनम् ॥ ५० ॥
(भानुकरस्य)

**अथान्धकारः—**

चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना ।
मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमांसि शैवलानि ॥ ५१ ॥
(भानुकरस्य)

इदं नभसि भीषणभ्रमदुलूककोलाहलै-
र्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् ।
परिस्फुरति निर्मलप्रचुरपङ्कमग्नोल्लस-
द्वराहकुलमांसलप्रबलबन्धमन्धं तमः ॥ ५२ ॥
(वासुदेवस्य)

**अथाभिसारिका—**

गाढे तमसि सरन्ती पथि स्खलन्ती सुपिच्छले मुग्धा ।
अवलम्बनाय चाराद्धारासु करं प्रसारयति ॥ ५३ ॥
चित्रोत्कीर्णादपि विषधराद्भीतिभाजो निशायां
किं नु ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः ।

ध्वान्ते यान्त्या यदतिनिभृतं बालयात्मप्रकाश-
त्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥ ५४ ॥

(कस्यापि) [हरिहरस्य]

रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥ ५५ ॥

(भानुकरस्य)

गन्तुं यदि व्यवसितासि घनान्धकारे
नीलाञ्चलेन तनुमावृणु मुग्धशीले ।
विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्रावृतैव कनकद्रवगौरि गच्छेः ॥ ५६ ॥

(कस्यापि)

मन्दं निधेहि चरणौ परिधेहि नीलं
वासः पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसिनि शारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥ ५७ ॥

(कस्यापि)

एकत्र कौलव्रतभङ्गशङ्का विदग्धताभङ्गभयं परत्र ।
इत्याकुलानां कुलकामिनीनां गतागतैरेव गता त्रियामा ॥ ५८ ॥

(कस्यापि)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचनायां** नवमो व्यापारः ॥

---

दशमो व्यापारः ।

अथ **चक्रवाकावस्था**—

वापीतोयं तटरुहवनं पद्मिनीपत्रशय्या
चन्द्रालोको विकचकुमुदामोदहृद्यः समीरः ।
यत्रैतेऽपि प्रियविरहिणो दाहिनश्चक्रनाम्न-
स्तत्रोपायः क इव भवतु प्राणसंधारणे यः ॥ १ ॥

ध्वान्ते यान्त्या यदतिनिभृतं बालयात्मप्रकाश-
त्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥ ५४ ॥
(कस्यापि) [हरिहरस्य]

रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥ ५५ ॥
(भानुकरस्य)

गन्तुं यदि व्यवसितासि घनान्धकारे
नीलाञ्चलेन तनुमावृणु मुग्धशीले ।
विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्रावृतैव कनकद्रवगौरि गच्छेः ॥ ५६ ॥
(कस्यापि)

मन्दं निधेहि चरणौ परिधेहि नीलं
वासः पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसिनि शारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥ ५७ ॥
(कस्यापि)

एकत्र कौलव्रतभङ्गशङ्का विदग्धताभङ्गभयं परत्र ।
इत्याकुलानां कुलकामिनीनां गतागतैरेव गता त्रियामा ॥ ५८ ॥
(कस्यापि)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचनायां** नवमो व्यापारः ॥

---

दशमो व्यापारः ।

अथ **चक्रवाकावस्था**—

वापीतोयं तटरुहवनं पद्मिनीपत्रशय्या
चन्द्रालोको विकचकुमुदामोदहृद्यः समीरः ।
यत्रैतेऽपि प्रियविरहिणो दाहिनश्चक्रनाम्न-
स्तत्रोपायः क इव भवतु प्राणसंधारणे यः ॥ १ ॥

भङ्क्त्वा भोक्तुं न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्का-
तारकारास्तृषार्तः पिबति न पयसां विप्रुषः पत्रसंस्थाः ।
छायामम्भोरुहाणामलिकुलमलिनां वेत्ति संध्यामसंध्यां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ २ ॥

[एष रुद्रस्य] (कयोरप्येतौ)

**अथ तारावर्णनम्—**

सिन्धोः सुधांशुशकलं परिगृह्य संध्या
क्षेमंकरी निपतिताम्बरभूरुहाग्रे ।
चञ्चूपुटेन चपलेन तया विकीर्णा-
स्तारामिषेण पतिता इव पक्षखण्डाः ॥ ३ ॥

व्योम्नि प्राङ्गणसीम्नि सांध्यकिरणं विस्तार्य चेलाञ्चलं
ध्वान्तैः कार्मणपांसुभिश्च जगतां द्राङ्मोहयित्वा दृशौ ।
ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना
जिंजिंकृत्य च मायिकः स्मरनटो वक्राद्बहिर्वर्षति ॥ ४ ॥

(भानुकरस्यैतौ)

इयं संध्यातल्पं किमकृत⋯⋯⋯
प्रवालैर्माहेन्द्री हरिदहिमभानोर्विरहिता ।
यदेषां वृन्तेषु स्फुरदमलमुक्ताचयरुचिः
[स्फुटं] वारां बिन्दुप्रकर इव तारापरिकरः ॥ ५ ॥

अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः ।
रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥ ६ ॥

(गणपतेः)

निशाधिनाथस्य करावमर्षात्संमीलिताम्भोरुहलोचनायाः ।
निशाङ्गनायाः कपटादुडूनां किं स्वेदबिन्दूत्कर आविरासीत् ॥ ७ ॥

(लक्ष्मणस्य)

भङ्क्त्वा भोक्तुं न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्का-
त्ताराकारास्तृषार्तः पिबति न पयसां विप्रुषः पत्रसंस्थाः ।
छायामम्भोरुहाणामलिकुलमलिनां वेत्ति संध्यामसंध्यां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ २ ॥

[एष रुद्रस्य] (कयोरप्येतौ)

**अथ तारावर्णनम्—**

सिन्धोः सुधांशुशकलं परिगृह्य संध्या
क्षेमंकरी निपतिताम्बरभूरुहाग्रे ।
चञ्चूपुटेन चपलेन तया विकीर्णा-
स्तारामिषेण पतिता इव पक्षखण्डाः ॥ ३ ॥

व्योम्नि प्राङ्गणसीम्नि सांध्यकिरणं विस्तार्य चेलाञ्चलं
ध्वान्तैः कार्मणपांसुभिश्च जगतां द्राङ्मोहयित्वा दृशौ ।
ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना
जिंजिकृत्य च मायिकः स्मरनटो वक्त्राद्बहिर्वर्षति ॥ ४ ॥

(भानुकरस्यैतौ)

इयं संध्यातल्पं किमकृत············
प्रवालैर्माहेन्द्री हरिदहिमभानोर्विरहिता ।
यदेषां वृन्तेषु स्फुरदमलमुक्ताचयरुचिः
[स्फुटं] वारां बिन्दुप्रकर इव तारापरिकरः ॥ ५ ॥

अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः ।
रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥ ६ ॥

(गणपतेः)

निशाधिनाथस्य करावमर्षात्संमीलिताम्भोरुहलोचनायाः ।
निशाङ्गनायाः कपटादुडूनां किं स्वेदबिन्दूत्कर आविरासीत् ॥ ७ ॥

(लक्ष्मणस्य)

अथ **चन्द्रः**—

गगनविपिनसिंहः कामभूपालपत्रं
निखिलदिगबलानां कन्दुकं क्रीडनाय ।
मणिरिव रतिभर्तुः कार्मणः पार्वणोऽयं
जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्बः ॥ ८ ॥

(लक्ष्मणस्य)

निर्वेदः सरसीरुहस्य महिलाकोपस्य काशीपदं
सिद्धान्तो मकरध्वजस्य तिमिरस्तोमस्य होमस्थली ।
प्रव्रज्या कुमुदक्लमस्य कुलटावाटस्य पाटच्चरः
पूर्वाद्रेरुदियाय विभ्रमवणिग्देवः क्षपाकामुकः ॥ ९ ॥

नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतारकायाः ।
निशाङ्गनायाः स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १० ॥

(भानुकरस्यैतौ)

ताराक्षतान्प्रविकिरन्कलकण्ठनादा-
न्मन्त्राक्षराणि निगदन्कुसुमेषुरेषः ।
लाभाय वासरमणेर्मुषितस्य सायं
संचारयत्यमृतदीधितिकांस्यपात्रम् ॥ ११ ॥

दिग्बालाकरकन्दुकः स्मरवधूसीमन्तमुक्तामणिः
कामक्षोणिपतेर्विहारवलभीनिर्व्यूहपारावतः ।
हट्टव्योम्नि विकीर्णतारकमणिः श्यामावणिक्सुभ्रुवः
स्फारः स्फाटिकसंपुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥ १२ ॥

(गणपतेरेतौ)

अथ **सकलङ्कचन्द्रः**—

अयं पुरः पार्वणशर्वरीशः किं दर्पणोऽयं रजनीरमण्याः ।
यतस्तदीयं प्रतिबिम्बमस्मिन्संलक्ष्यते लाञ्छनकैतवेन ॥ १३ ॥

(लक्ष्मणस्य)

अथ **चन्द्रः**—

गगनविपिनसिंहः कामभूपालपत्रं
निखिलदिगबलानां कन्दुकं क्रीडनाय ।
मणिरिव रतिभर्तुः कार्मणः पार्वणोऽयं
जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्बः ॥ ८ ॥

(लक्ष्मणस्य)

निर्वेदः सरसीरुहस्य महिलाकोपस्य काशीपदं
सिद्धान्तो मकरध्वजस्य तिमिरस्तोमस्य होमस्थली ।
प्रव्रज्या कुमुदक्लमस्य कुलटावाटस्य पाटच्चरः
पूर्वाद्रेरुदियाय विभ्रमवणिग्देवः क्षपाकामुकः ॥ ९ ॥

नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतारकायाः ।
निशाङ्गनायाः स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १० ॥

(भानुकरस्यैतौ)

ताराक्षतान्प्रविकिरन्कलकण्ठनादा-
न्मन्त्राक्षराणि निगदन्कुसुमेषुरेषः ।
लाभाय वासरमणेर्मुषितस्य सायं
संचारयत्यमृतदीधितिकांस्यपात्रम् ॥ ११ ॥

दिग्बालाकरकन्दुकः स्मरवधूसीमन्तमुक्तामणिः
कामक्षोणिपतेर्विहारवलभीनिर्व्यूहपारावतः ।
हट्टव्योम्नि विकीर्णतारकमणिः श्यामावणिक्सुभ्रुवः
स्फारः स्फाटिकसंपुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥ १२ ॥

(गणपतेरेतौ)

अथ **सकलङ्कचन्द्रः**—

अयं पुरः पार्वणशर्वरीशः किं दर्पणोऽयं रजनीरमण्याः ।
यतस्तदीयं प्रतिबिम्बमस्मिन्संलक्ष्यते लाञ्छनकैतवेन ॥ १३ ॥

(लक्ष्मणस्य)

प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् ।
सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्ममिषेण दत्तः ॥ १४ ॥
(गणपतेः)

ख्याता वयं समधुपा मधुकोशवत्य-
श्चन्द्रः प्रसारितकरो द्विजराज एषः ।
अस्मत्समागमकृतोऽस्य पुनर्द्वितीयो
मा भूत्कलङ्क इति संकुचिता नलिन्यः ॥ १५ ॥
(कस्यापि)

मम प्रियां कैरविणीं करेण संतापयामास दिनाधिनाथः ।
इतीव दुःखैर्विकलः कलावान्पपौ विषं लक्ष्ममिषेण सद्यः ॥ १६ ॥
(कस्यापि)

कलाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एव भृङ्गः ।
किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनोति ॥ १७ ॥
(वाणीविलासस्य)

समस्तापास्तांशौ विरतिमहिमांशौ परिगते
दिवाभीतः शीतद्युतिरयमुदीतः समुदभूत् ।
...................... यदपिबत्कुक्षिषु गता-
स्त एवाङ्के बीजं शशिनि किल शङ्के समभवन्॥ १८ ॥
(लक्ष्मणस्य)

अथ **हर्म्यम्**—

निपीय पीयूषमयूखबिम्बे सुधाशरावप्रतिमे कपोताः ।
नक्षत्रमालासु कणभ्रमेण [चिरेण]चञ्चुं चपलाः क्षिपन्ति ॥ १९ ॥

यत्रालसा हरिणशावदृशो विहार-
पर्यस्तहारमणिमेदुरकेलितल्पाः ।
तारासु सौधशिखराञ्चलचुम्बिनीषु
मुक्ताभ्रमेण करपल्लवमर्पयन्ति ॥ २० ॥
(एतौ गणपतेः)

प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् ।
सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्ममिषेण दत्तः ॥ १४ ॥
(गणपतेः)

ख्याता वयं समधुपा मधुकोशवत्य-
श्चन्द्रः प्रसारितकरो द्विजराज एषः ।
अस्मत्समागमकृतोऽस्य पुनर्द्वितीयो
मा भूत्कलङ्क इति संकुचिता नलिन्यः ॥ १५ ॥
(कस्यापि)

मम प्रियां कैरविणीं करेण संतापयामास दिनाधिनाथः ।
इतीव दुःखैर्विकलः कलावान्पपौ विषं लक्ष्ममिषेण सद्यः ॥ १६ ॥
(कस्यापि)

कलाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एव भृङ्गः ।
किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनोति ॥ १७ ॥
(वाणीविलासस्य)

समस्तापास्तांशौ विरतिमहिमांशौ परिगते
दिवाभीतः शीतद्युतिरयमुदीतः समुदभूत् ।
........................ यदपिबत्कुक्षिषु गता-
स्त एवाङ्के बीजं शशिनि किल शङ्के समभवन् ॥ १८ ॥
(लक्ष्मणस्य)

अथ **हर्म्यम्**—

निपीय पीयूषमयूखबिम्बे सुधाशरावप्रतिमे कपोताः ।
नक्षत्रमालासु कणभ्रमेण [चिरेण]चञ्चुं चपलाः क्षिपन्ति ॥ १९ ॥

यत्रालसा हरिणशावदृशो विहार-
पर्यस्तहारमणिमेदुरकेलितल्पाः ।
तारासु सौधशिखराञ्चलचुम्बिनीषु
मुक्ताभ्रमेण करपल्लवमर्पयन्ति ॥ २० ॥
(एतौ गणपतेः)

भित्तौ भित्तौ प्रतिफलगतं भालसिन्दूरपूरं
दृष्ट्वा दृष्ट्वा कमलनयना केलिदीपभ्रमेण।
कान्ते चोलं हरति हरितं लोलमालोकयन्ती
यत्र प्रच्छादयति सहसा पाणिपङ्केरुहेण ॥ २१ ॥

(भानुकरस्य)

स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः।
आरुह्य नार्यः क्षणदासु यस्यां नभोगता देव्य इव व्यराजन् ॥ २२ ॥

(माघकवेः)

यदीयसौधस्फुरदिन्द्रनीलगवाक्षकुक्षिं प्रविशन्हिमांशुः।
उत्कंधराणामनिशं नराणामिन्दूपरागभ्रममातनोति ॥ २३ ॥

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचना**यां दशमो व्यापारः।

---

एकादशो व्यापारः।

यतो द्वये निरूप्यत्वं शृङ्गारस्य रसस्य तु।
अतः संक्षेपतः कुर्वे नायकानां निरूपणम् ॥ १ ॥

**अथानुकूलो नायकः—**

अरुणदलनलिन्या स्निग्धपादारविन्दा
कठिनतरधरण्यां यान्यकस्मात्स्खलन्ती।
अवनि तव सुतेयं पादविन्यासदेशे
त्यज निजकठिनत्वं जानकी यात्यरण्यम् ॥ २ ॥

(महानाटकात्।)

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया।
तल्पे किं च मृगत्वचाविरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ ३ ॥
वक्षोजद्वयशीलनेऽपि नखरातङ्कं न (हि) शङ्के तव
स्याद्बिम्बाधरचुम्बनेऽपि दशनच्छेदेन खेदोदयः।

भित्तौ भित्तौ प्रतिफलगतं भालसिन्दूरपूरं
दृष्ट्वा दृष्ट्वा कमलनयना केलिदीपभ्रमेण ।
कान्ते चोलं हरति हरितं लोलमालोकयन्ती
यत्र प्रच्छादयति सहसा पाणिपङ्केरुहेण ॥ २१ ॥

(भानुकरस्य)

स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्यः क्षणदासु यस्यां नभोगता देव्य इव व्यराजन् ॥ २२ ॥

(माघकवेः)

यदीयसौधस्फुरदिन्द्रनीलगवाक्षकुक्षिं प्रविशन्हिमांशुः ।
उत्कंधराणामनिशं नराणामिन्दूपरागभ्रममातनोति ॥ २३ ॥

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचना**यां दशमो व्यापारः ।

---

एकादशो व्यापारः ।

यतो द्वये निरूप्यत्वं शृङ्गारस्य रसस्य तु ।
अतः संक्षेपतः कुर्वे नायकानां निरूपणम् ॥ १ ॥

**अथानुकूलो नायकः—**

अरुणदलनलिन्या स्निग्धपादारविन्दा
कठिनतरधरण्यां यान्यकस्मात्स्खलन्ती ।
अवनि तव सुतेयं पादविन्यासदेशे
त्यज निजकठिनत्वं जानकी यात्यरण्यम् ॥ २ ॥

(महानाटकात् ।)

आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।
तल्पे किं च मृगत्वचाविरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभरालसां प्रियतमामङ्के दधानो हरः ॥ ३ ॥
वक्षोजद्वयशीलनेऽपि नखरातङ्कं न (हि) शङ्के तव
स्याद्बिम्बाधरचुम्बनेऽपि दशनच्छेदेन खेदोदयः ।

आश्लेषेऽपि वपुर्लता तव पुनर्भिद्येत रोमाङ्कुरा-
दित्थं पद्मविलोचने विरमति त्रासो न दासस्य मे ॥ ४ ॥

अथ **दक्षिणनायकः**—

एतत्पुरः स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥ ५ ॥

चिरादुपेतः प्रथमं प्रदानं विचिन्त्य कर्तुं न पतिः शशाक ।
मध्येसखं केवलमङ्गनानां संयोजयामास विभूषणानि ॥ ६ ॥

( एते भानुकरस्य )

दृष्ट्वा पतिः पद्मदृशां सहस्रं दातुं न कस्यैचिदलं तदेकम् ।
एकैकमुत्कृत्य कृती दिदेश सर्वाणि पत्राणि सहस्रपत्रात् ॥ ७ ॥

( लक्ष्मणस्य )

अथ **धृष्टो नायकः**—

ब········हरकिसलयो··················
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः ।
तल्पोपान्ते कनकवलयं भ्रष्टमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥ ८ ॥

एतस्य रहसि वक्षसि सरसिजपत्रेण ताडितस्यापि ।
दयितस्य वीक्ष्य हसितं प्रियसखि हसितं ममाप्यासीत् ॥ ९ ॥

अथ **धूर्तो नायकः**—

धुन्वन्त्याः करपल्लवं मृगदृशो जातागसः प्रेयसो
वक्त्राम्भोरुहहेमकङ्कणमणिस्पर्शे समुन्मीलति ।
चक्षुर्विघ्नितमित्युदीर्य सहसा धूर्तेन तच्चेष्टितं
तस्थौ येन चिराय सैव शिरसा नम्रेण शातोदरी ॥ १० ॥

( भानुकरस्यैतौ )

आश्लेषेऽपि वपुर्लता तव पुनर्भिद्येत रोमाङ्कुरा-
दित्थं पद्मविलोचने विरमति त्रासो न दासस्य मे ॥ ४ ॥

अथ **दक्षिणनायकः**—

एतत्पुरः स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।
इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥ ५ ॥

चिरादुपेतः प्रथमं प्रदानं विचिन्त्य कर्तुं न पतिः शशाक ।
मध्येसखं केवलमङ्गनानां संयोजयामास विभूषणानि ॥ ६ ॥
( एते भानुकरस्य )

दृष्ट्वा पतिः पद्मदृशां सहस्रं दातुं न कस्मैचिदलं तदेकम् ।
एकैकमुत्कृत्य कृती दिदेश सर्वाणि पत्राणि सहस्रपत्रात् ॥ ७ ॥
( लक्ष्मणस्य )

अथ **धृष्टो नायकः**—

ब········हरकिसलयो··················
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः ।
तल्पोपान्ते कनकवलयं भ्रष्टमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥ ८ ॥

एतस्य रहसि वक्षसि सरसिजपत्रेण ताडितस्यापि ।
दयितस्य वीक्ष्य हसितं प्रियसखि हसितं ममाप्यासीत् ॥ ९ ॥

अथ **धूर्तो नायकः**—

धुन्वन्त्याः करपल्लवं मृगदृशो जातागसः प्रेयसो
वक्राम्भोरुहहेमकङ्कणमणिस्पर्शो समुन्मीलति ।
चक्षुर्विघ्नितमित्युदीर्य सहसा धूर्तेन तच्चेष्टितं
तस्थौ येन चिराय सैव शिरसा नम्रेण शातोदरी ॥ १० ॥
( भानुकरस्यैतौ )

अथ **मानी नायकः**—

संत्यक्तजल्पे परिवृत्तवक्त्रे कृतागसि प्रेयसि तल्पसुप्ते ।
बाला मुहुर्न्यस्यति बाहुपाशं मुहुर्मुखं संमुखमातनोति ॥ ११ ॥
( लक्ष्मणस्य )

**अथानभिज्ञो नायकः**—

शून्ये सद्मनि योजिता बहुविधा भङ्गिर्वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः ।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दूति कियता यत्नेन संज्ञास्यति ॥ १२ ॥
पर्यस्तालकगण्डपालिवदनाम्भोजं मया चुम्बितं
प्रत्यङ्गं करपल्लवेन पुलकश्रेणिस्पृशा लालितम् ।
दोर्भ्यां तस्य कठोरकङ्कणरवं दोर्वल्लिरालिङ्गिता
निद्रात्येव मुहुस्तथापि दयितः कस्मै किमाचक्ष्महे ॥ १३ ॥

अथ **शिशुनायकः**—

अनवाप्तवयसि रहसि ........ पर्यङ्कमागते जयति ।
मदचपललोचनाया मूकस्वप्नायितो भावः ॥ १४ ॥
प्रियतममजातयौवनमन्तः परिचिन्त्य पद्माक्षी ।
अङ्गानि भूषयन्तीमालीमालीढयौवना हसति ॥ १५ ॥
( भानुकरस्य )

संमुखं मुखविधुं न चुम्बतः कुर्वतो न च कुचे करार्पणम् ।
पत्युरल्पवयसोऽन्तिके गता दैवमेव विनिनिन्द सुन्दरी ॥ १६
( लक्ष्मणस्य )

अथ **वृद्धनायकः**—

उद्भिदुरं स्तनवदनं लोचनमलिगर्वमोचनं सुदृशः ।
दृष्ट्वा विगतविचारं धातारं निन्दति स्थविरः ॥ १७ ॥
( भानुकरस्य )

अथ **मानी नायकः**—

संत्यक्तजल्पे परिवृत्तवक्त्रे कृतागसि प्रेयसि तल्पसुप्ते ।
बाला मुहुर्न्यस्यति बाहुपाशं मुहुर्मुखं संमुखमातनोति ॥ ११ ॥
(लक्ष्मणस्य)

अथानभिज्ञो **नायकः**—

शून्ये सद्मनि योजिता बहुविधा भङ्गिर्वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः ।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दूति कियता यत्नेन संज्ञास्यति ॥ १२ ॥
पर्यस्तालकगण्डपालिवदनाम्भोजं मया चुम्बितं
प्रत्यङ्गं करपल्लवेन पुलकश्रेणिस्पृशा लालितम् ।
दोर्भ्यां तस्य कठोरकङ्कणरवं दोर्वल्लिरालिङ्गिता
निद्रात्येव मुहुस्तथापि दयितः कस्मै किमाचक्ष्महे ॥ १३ ॥

अथ **शिशुनायकः**—

अनवाप्तवयसि रहसि ....... पर्यङ्कमागते जयति ।
मदचपललोचनाया मूकस्वप्नायितो भावः ॥ १४ ॥
प्रियतममजातयौवनमन्तः परिचिन्त्य पद्माक्षी ।
अङ्गानि भूषयन्तीमालीमालीढयौवना हसति ॥ १५ ॥
(भानुकरस्य)

संमुखं मुखविधुं न चुम्बतः कुर्वतो न च कुचे करार्पणम् ।
पत्युरल्पवयसोऽन्तिके गता दैवमेव विनिनिन्द सुन्दरी ॥ १६
(लक्ष्मणस्य)

अथ **वृद्धनायकः**—

उद्भिदुरं स्तनवदनं लोचनमलिगर्वमोचनं सुदृशः ।
दृष्ट्वा विगतविचारं धातारं निन्दति स्थविरः ॥ १७ ॥
(भानुकरस्य)

अचिन्तनीया विधिवञ्चनेयं यदम्बुजाक्षी स्थविरस्य भर्तुः ।
स्वयं समादाय करं निधाय वक्षोजयुग्मे स्वपिति श्वसन्ती ॥ १८ ॥
( लक्ष्मणस्य )

**अथाविदग्धनायकः—**

क्रीडासु सव्रीडमहो विलासान्नीवीनिरोधे निहितं मृगाक्ष्या ।
कराम्बुजं वीक्ष्य पतिः सरोषो ददौ ललाटे सुदृशश्चपेटाम् ॥ १९ ॥
( लक्ष्मणस्य )

**अथ देशान्तरोपगतनायकः—**

दिदृक्षमाणः क्षणमायताक्ष्या मुखाम्बुजं मञ्जुलमध्वनीनः ।
मुहूर्तमात्रं सुमुहूर्तकालं स वर्षकालं कलयांचकार ॥ २० ॥
निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीनः ।
यथा तथा बद्धकथावशेषं समापयामास समं सुहृद्भिः ॥ २१ ॥
( कस्यापि )

मुखं प्रियायाः समुदीक्षमाणः कान्तो दिनस्यान्तमपेक्षमाणः ।
मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचनानि ॥ २२ ॥
( भानुकरस्य )

**अथ षड्ऋतुवर्णनम् । तत्र वर्षर्तुः—**

कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद्विजेतुम् ।
किं चन्द्रबिम्बं दधि भक्षयन्ती संधारयन्ती हरितः शुभाय ॥ २३ ॥
( लक्ष्मणस्य )

**अथ जलधरः—**

शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वतः ।
नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥ २४ ॥
( सर्वदासस्य )

चलद्बलाकादशनाभिरामः परिस्रवद्वारिमदाम्बुधारः ।
आहन्यमानस्तडिदंशुकेन सरस्य दध्वान घनद्विपेन्द्रः ॥ २५ ॥
( गदाधरस्य )

अचिन्तनीया विधिवञ्चनेयं यदम्बुजाक्षी स्थविरस्य भर्तुः।
स्वयं समादाय करं निधाय वक्षोजयुग्मे स्वपिति श्वसन्ती॥ १८॥
(लक्ष्मणस्य)

अथाविदग्धनायकः—
क्रीडासु सव्रीडमहो विलासान्नीवीनिरोधे निहितं मृगाक्ष्या।
कराम्बुजं वीक्ष्य पतिः सरोषो ददौ ललाटे सुदृशश्चपेटाम्॥ १९॥
(लक्ष्मणस्य)

अथ देशान्तरोपगतनायकः—
दिदृक्षमाणः क्षणमायताक्ष्या मुखाम्बुजं मञ्जुलमध्वनीनः।
मुहूर्तमात्रं सुमुहूर्तकालं स वर्षकालं कलयांचकार॥ २०॥
निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीनः।
यथा तथा बद्धकथावशेषं समापयामास समं सुहृद्भिः॥ २१॥
(कस्यापि)

मुखं प्रियायाः समुदीक्षमाणः कान्तो दिनस्यान्तमपेक्षमाणः।
मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचनानि॥ २२॥
(भानुकरस्य)

अथ षड्ऋतुवर्णनम्। तत्र वर्षर्तुः—
कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद्विजेतुम्।
किं चन्द्रबिम्बं दधि भक्षयन्ती संधारयन्ती हरितः शुभाय॥ २३॥
(लक्ष्मणस्य)

अथ जलधरः—
शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वतः।
नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम्॥ २४॥
(सर्वदासस्य)

चलद्बलाकादशनाभिरामः परिस्रवद्वारिमदाम्बुधारः।
आहन्यमानस्तडिदंशुकेन सरस्य दध्वान घनद्विपेन्द्रः॥ २५॥
(गदाधरस्य)

वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराभूत् ।
पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥ २६ ॥
दशमुखभजमानिह्रीकः (?) स्फुरदतिघोरगभीरमेघनादः ।
अयमिह समयः पयोधराणां तुलयति रावणपत्तनोपकण्ठे ॥ २७ ॥
( रामचन्द्रस्यैतौ )

अथ घनदुर्दिनम्—

घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ हिमांशोः संकथैव व्यरंसीत् ।
रजनिदिवसभेदं मन्दवाताः शशंसुः
कुमुदकमलगन्धानाहरन्तः क्रमेण ॥ २८ ॥ ( रघुपतेः )

घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः संकथैव व्यरंसीत् ।
विरहमनुभवन्ती संगमं चापि भर्त्रा
रजनिदिवसभेदं चक्रवाकी शशंस ॥ २९ ॥
( अम्बष्ठस्य )

घनोद्गमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक ।
स्पृशन्मुहुः किंतु करेण नाभीसरोजमाभीरकुलाधिनाथः ॥ ३० ॥
( रामचन्द्रस्य )

अथ घनगर्जितम्—

या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् ।
इतीव दण्डैः किमु ताड्यतेऽसौ कादम्बिनी कामनृपस्य ढक्का ॥ ३१ ॥
चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः ।
भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष गर्जितम् ॥ ३२ ॥
निद्रितस्य बत शम्बरद्विषो जागराय किमु वारिवाहकः ।
ऊर्जितं दधदतीव गर्जितं संभ्रमन्नभसि संभ्रमाद्ययौ ॥ ३३ ॥
( एते लक्ष्मणस्य )

वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराभूत् ।
पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥ २६ ॥
दशमुखभजमानिह्रीकः (?) स्फुरदतिघोरगभीरमेघनादः ।
अयमिह समयः पयोधराणां तुलयति रावणपत्तनोपकण्ठे ॥ २७ ॥
( रामचन्द्रस्यैतौ )

अथ **घनदुर्दिनम्**—

घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ हिमांशोः संकथैव व्यरंसीत् ।
रजनिदिवसभेदं मन्दवाताः शशंसुः
कुमुदकमलगन्धानाहरन्तः क्रमेण ॥ २८ ॥ ( रघुपतेः )
घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः संकथैव व्यरंसीत् ।
विरहमनुभवन्ती संगमं चापि भर्त्रा
रजनिदिवसभेदं चक्रवाकी शशंस ॥ २९ ॥
( अम्बष्ठस्य )

घनोद्गमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक ।
स्पृशन्मुहुः किंतु करेण नाभीसरोजमाभीरकुलाधिनाथः ॥ ३० ॥
( रामचन्द्रस्य )

अथ **घनगर्जितम्**—

या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् ।
इतीव दण्डैः किमु ताड्यतेऽसौ कादम्बिनी कामनृपस्य ढक्का ॥ ३१ ॥
चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः ।
भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष गर्जितम् ॥ ३२ ॥
निद्रितस्य बत शम्बरद्विषो जागराय किमु वारिवाहकः ।
ऊर्जितं दधदतीव गर्जितं संभ्रमन्नभसि संभ्रमाद्ययौ ॥ ३३ ॥
( एते लक्ष्मणस्य )

अथ **विद्युत्**—

याचितेन बहु चातकद्विजैरम्बुदेन जलदानपूर्वकम्।
हेमयष्टिरिव दूरमीरिता संचचार रुचिरा चिरप्रभा॥ ३४॥

(कविराजस्य)

क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम्।
क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः॥ ३५॥

(पाणिनेः)

अथ **वर्षाविरहिणी**—

मन्दं मन्दं ध्वनति जलदो बिन्दु····वर्ष-
न्मन्दं मन्दं किरति पवनः केतकीकेसराणि।
स्वैरं स्वैरं लसति च तडित्किंतु वाच्यं मया ते
वारंवारं वितर सखि मे जीवनं जीवनाय॥ ३६॥

सहचरि परिपन्थिनं पुरस्ताज्जलधरमतकं कसरानुकारम्। (?)
परिहर परिहार्यमाशु नोचेद्वितर जलाञ्जलिमेव जीवनाय॥

(एतौ लक्ष्मणस्य)

अथ **खद्योतः**—

खद्योतपोतप्रकराः समं खे द्योतन्त एते द्युतिभिः प्रचण्डाः।
पयोदसंघट्टविघट्टनस्य किं वैद्युतस्य ज्वलनस्य खण्डाः॥ ३७॥

(लक्ष्मणस्य)

पाथोधरीयपटलेन विदारितस्य
मार्तण्डमण्डलपचेलिमदाडिमस्य।
व्योमाङ्गणे निपतिता इव बीजपूराः
खद्योतपोतसुषमां स्फुटमावहन्ति॥ ३८॥
प्राचीमहीधरशिला विनिवेशितस्य
धाराधरस्फुरदयोघनताडितस्य।

अथ **विद्युत्**—

याचितेन बहु चातकद्विजैरम्बुदेन जलदानपूर्वकम् ।
हेमयष्टिरिव दूरमीरिता संचचार रुचिरा चिरप्रभा ॥ ३४ ॥

( कविराजस्य )

क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः ॥ ३५ ॥

( पाणिनेः )

अथ **वर्षाविरहिणी**—

मन्दं मन्दं ध्वनति जलदो बिन्दु····वर्ष-
न्मन्दं मन्दं किरति पवनः केतकीकेसराणि ।
स्वैरं स्वैरं लसति च तडित्किंतु वाच्यं मया ते
वारंवारं वितर सखि मे जीवनं जीवनाय ॥ ३६ ॥

सहचरि परिपन्थिनं पुरस्ताज्जलधरमतकं कसरानुकारम् ।(?)
परिहर परिहार्यमाशु नोचेद्वितर जलाञ्जलिमेव जीवनाय ॥

( एतौ लक्ष्मणस्य )

अथ **खद्योतः**—

खद्योतपोतप्रकराः समं खे द्योतन्त एते द्युतिभिः प्रचण्डाः ।
पयोदसंघट्टविघट्टनस्य किं वैद्युतस्य ज्वलनस्य खण्डाः ॥ ३७ ॥

( लक्ष्मणस्य )

पाथोधरीयपटलेन विदारितस्य
मार्तण्डमण्डलपचेलिमदाडिमस्य ।
व्योमाङ्गणे निपतिता इव बीजपूराः
खद्योतपोतसुषमां स्फुटमावहन्ति ॥ ३८ ॥
प्राचीमहीधरशिला विनिवेशितस्य
धाराधरस्फुरदयोघनताडितस्य ।

तप्तायसस्य तपनस्य कणा विकीर्णाः
खद्योतपोतकपटादिव विस्फुरन्ति ॥ ३९ ॥
( भानुकरस्यैतौ )

अथ हंसः—

तटमुपगतं पद्मे पद्मे निवेशितमाननं
प्रतिपुटकिनीपत्रच्छायं मुहुर्मुहुरासितम् ।
मुहुरुपगतैरस्त्रैः कोष्णीकृता जलवीचयो
जलदमलिनां हंसेनाशां विलोक्य पिपासता ॥ ४० ॥
( कस्यापि )

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ पद्यरचनायामेकादशो व्यापारः ।

---

द्वादशो व्यापारः ।

अथ शरत्—

स्वच्छाम्बराच्छादितसर्वगात्रा राजीवनेत्रा लसदिन्दुवक्त्रा ।
क्वणन्मरालव्रजनूपुराढ्या ययौ मदाढ्येव शरन्नताङ्गी ॥ १ ॥
( लक्ष्मणस्य )

पयोदजालजम्बालजटिला शरदङ्गना ।
अम्बरं धारयामास चन्द्रिकाचयवारिभिः ॥ २ ॥
अहो बाणस्य संधानं शरदि स्मरभूपतेः ।
अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥ ३ ॥
अथोत्तरस्यां दिशि खञ्जरीटमालोक्य कोऽपि स्मितमादधानः ।
कस्याश्चिदास्ये स्मितचारुभासि संभावयामास विलोचनानि ॥ ४ ॥
( भानुकरस्यैते )

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृति(त)ज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ५ ॥
( भासस्य )

तप्तायसस्य तपनस्य कणा विकीर्णाः
खद्योतपोतकपटादिव विस्फुरन्ति ॥ ३९ ॥
(भानुकरस्यैतौ)

अथ हंसः—

तटमुपगतं पद्मे पद्मे निवेशितमाननं
प्रतिपुटकिनीपत्रच्छायं मुहुर्मुहुरासितम्।
मुहुरुपगतैरस्रैः कोष्णीकृता जलवीचयो
जलदमलिनां हंसेनाशां विलोक्य पिपासता ॥ ४० ॥
(कस्यापि)

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ पद्यरचनायामेकादशो व्यापारः।

---

द्वादशो व्यापारः।

अथ शरत्—

स्वच्छाम्बराच्छादितसर्वगात्रा राजीवनेत्रा लसदिन्दुवक्त्रा।
क्वणन्मरालव्रजनूपुराढ्या ययौ मदाढ्येव शरन्नताङ्गी ॥ १ ॥
(लक्ष्मणस्य)

पयोदजालजम्बालजटिला शरदङ्गना।
अम्बरं धारयामास चन्द्रिकाचयवारिभिः ॥ २ ॥

अहो बाणस्य संधानं शरदि स्मरभूपतेः।
अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥ ३ ॥

अथोत्तरस्यां दिशि खञ्जरीटमालोक्य कोऽपि स्मितमादधानः।
कस्याश्चिदास्ये स्मितचारुभासि संभावयामास विलोचनानि ॥ ४ ॥
(भानुकरस्यैते)

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृति(त)ज्ञः।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ५ ॥
(भासस्य)

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः।
वाता नवरतग्लानवधूगमनमन्थराः ॥ ६ ॥

( वाल्मीकेः )

कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः।
पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ ७ ॥

( भोजप्रबन्धात् )

प्रबोधभाजः परमस्य पुंसो विलोचने द्वे किल मुक्तनिद्रे।
व्यपेतपाथोद(ध)रपक्ष्मरोधे व्यराजतां व्योमनि पुष्पवन्तौ ॥ ८ ॥

( कविराजस्य )

चन्द्रे गते सभिग(क)तामिह कार्तिकेय-
ह्यूतोत्सवं····खेलति पञ्चबाणे (?)।
·································
तारास्त एव परितो वियति स्फुरन्ति ॥ ९ ॥

( लक्ष्मणस्य )

अथ **हेमन्तः**—

हेमन्तहिमनिस्पन्दमवलोक्य मनोभवम्।
प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दधौ ॥ १० ॥
अभ्युल्लसन्ति विनिवारितचन्दनाना-
मेणीदृशां वपुषि कुङ्कुमपत्रलेखाः।
अभ्यागताः करसरोजपदारविन्द-
संरक्षणाय किरणा इव शीत(तिग्म)भानोः ॥ ११ ॥
अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान्।
अधिकं ददौ निजाङ्गादथ संकुचितः स्वयं तस्थौ ॥ १२ ॥

(भानुकरस्यैतौ)

लज्जा प्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव
स्वैरिण्या नियमा इव स्मितरुचः कुल्याङ्गनानामिव।

वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः ।
वाता नवरतग्लानवधूगमनमन्थराः ॥ ६ ॥

( वाल्मीकेः )

कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः ।
पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ ७ ॥

( भोजप्रबन्धात् )

प्रबोधभाजः परमस्य पुंसो विलोचने द्वे किल मुक्तनिद्रे ।
व्यपेतपाथोद(ध)रपक्ष्मरोधे व्यराजतां व्योमनि पुष्पवन्तौ ॥ ८ ॥

( कविराजस्य )

चन्द्रे गते सभिग(क)तामिह कार्तिकेय-
द्यूतोत्सवं····खेलति पञ्चबाणे (?) ।
..................................
तारास्त एव परितो वियति स्फुरन्ति ॥ ९ ॥

( लक्ष्मणस्य )

अथ **हेमन्तः**—

हेमन्तहिमनिस्पन्दमवलोक्य मनोभवम् ।
प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दधौ ॥ १० ॥
अभ्युल्लसन्ति विनिवारितचन्दनाना-
मेणीदृशां वपुषि कुङ्कुमपत्रलेखाः ।
अभ्यागताः करसरोजपदारविन्द-
संरक्षणाय किरणा इव शीत(तिग्म)भानोः ॥ ११ ॥
अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान् ।
अधिकं ददौ निजाङ्गादथ संकुचितः स्वयं तस्थौ ॥ १२ ॥

(भानुकरस्यैतौ)

लज्जा प्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव
स्वैरिण्या नियमा इव स्मितरुचः कुल्याङ्गनानामिव ।

दम्पत्योः कलहा इव प्रणयिता वाराङ्गनानामिव
प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ १३ ॥
( कविकङ्कणस्य )

अपि दिनमणिरेषः क्लेशितः शीतसङ्घै-
रथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् ।
स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मा-
त्किमु न भवतु दीर्घा यामिनी कामिनीयम् ॥ १४ ॥
दधत्यधरचुम्बनं नयनपङ्कजं मुद्रय-
त्यमन्दपुलकं मनागमलमङ्गमालिङ्गते ।
विचालयति चालकं चपललोचनानां हठा-
त्तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥ १५ ॥
कामिनो हन्त हेमन्तनिशि शीतज्वरातुराः ।
जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥ १६ ॥
(एते लक्ष्मणस्य)

हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् ।
अयत्नशीतलं वारि निशाश्च सुरतक्षमाः ॥ १७ ॥
हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम् ।
हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥ १८ ॥
( कयोरपि )

अथ शिशिरः—

तुषारभारविक्षुण्णं प्रेक्ष्य पङ्कजकाननम् ।
पङ्केरुहदृशः शङ्के पाणिः कम्पमविन्दत ॥ १९ ॥
आचुम्ब्य बिम्बाधरमङ्गवल्लि-
मालिङ्ग्य संस्पृश्य कपोलपालीम् ।
श्रीखण्डमादाय करेण कान्तः
संत्रासयामास सरोरुहाक्षीम् ॥ २० ॥

दम्पत्योः कलहा इव प्रणयिता वाराङ्गनानामिव
प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ १३ ॥

( कविकङ्कणस्य )

अपि दिनमणिरेषः क्लेशितः शीतसङ्गै-
रथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् ।
स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मा-
त्किमु न भवतु दीर्घा यामिनी कामिनीयम् ॥ १४ ॥

दधत्यधरचुम्बनं नयनपङ्कजं मुद्रय-
त्यमन्दपुलकं मनागमलमङ्गमालिङ्गते ।
विचालयति चालकं चपललोचनानां हठा-
त्तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥ १५ ॥

कामिनो हन्त हेमन्तनिशि शीतज्वरातुराः ।
जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥ १६ ॥

(एते लक्ष्मणस्य)

हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् ।
अयत्नशीतलं वारि निशाश्च सुरतक्षमाः ॥ १७ ॥
हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम् ।
हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥ १८ ॥

( कयोरपि )

अथ शिशिरः—

तुषारभारविक्षुण्णं प्रेक्ष्य पङ्कजकाननम् ।
पङ्केरुहदृशः शङ्के पाणिः कम्पमविन्दत ॥ १९ ॥

आचुम्ब्य बिम्बाधरमङ्गवल्लि-
मालिङ्ग्य संस्पृश्य कपोलपालीम् ।
श्रीखण्डमादाय करेण कान्तः
संत्रासयामास सरोरुहाक्षीम् ॥ २० ॥

एते समुल्लसद्भासो राजन्ते कुन्दकोरकाः ।
शीतभीता लताकुन्दमाश्रिता इव तारकाः ॥ २१ ॥
( भानुकरस्यैते )

शर्वरीषु किल शैशिरीषु तद्योषितां निधुवनेषु केलिषु ।
शीतशीर्यदधरेषु चुम्बनैः सीत्कृतं द्विगुणितं तदाभवत् ॥ २२ ॥
याम्या दिशः संनिधिचारिणस्ते स्ववैरिणः शमनवाहनस्य[1] ।
भिया हयाः किं तरणेः प्रतूर्णं जग्मुस्ततो दीनमिदं दिनं किम् ॥ २३ ॥
( लक्ष्मणस्यैतौ )

अथ **वसन्तसंधिः**—
चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ २४ ॥
( कालिदासस्य )

आपृच्छन्ते मलयजतरूनास्वजन्ते च वल्ली-
राभाषन्ते चिरपरिचितान्मालिनीनिर्झरौघान् ।
अद्य स्थित्वा द्रविडमहिलामन्दिरे श्वः प्रभाते
प्रस्थातारो मलयमरुतः कुर्वते संविधानम् ॥ २५ ॥
अनुभूतचरेषु दीर्घिकाणामुपकण्ठेषु गतागतैकतानाः ।
मधुपाः कथयन्ति पद्मिनीनां सलिलैरन्तरितानि कोरकाणि ॥ २६ ॥
उषसि भ्रमरयुवानः स्वप्ने दृष्ट्वा सरोजसाम्राज्यम् ।
गतकल्पकुन्दतल्पाः सरसीसलिलानि जिघ्रन्ति ॥ २७ ॥
( केषामप्येते )

व्यतीतकल्पे शिशिरैकबाल्ये संकल्पपुष्पोद्गमबन्धुराङ्गी ।
इयं लवङ्गी युवभृङ्गसङ्गादुच्छूनगुच्छस्तनिकेव भाति ॥ २८ ॥

---

१ महिषस्य.

एते समुल्लसद्भासो राजन्ते कुन्दकोरकाः।
शीतभीता लताकुन्दमाश्रिता इव तारकाः॥ २१॥
(भानुकरस्यैते)

शर्वरीषु किल शैशिरीषु तद्योषितां निधुवनेषु केलिषु।
शीतशीर्यदधरेषु चुम्बनैः सीत्कृतं द्विगुणितं तदाभवत्॥ २२॥
याम्या दिशः संनिधिचारिणस्ते स्ववैरिणः शामनवाहनस्य।
भिया हयाः किं तरणेः प्रतूर्णं जग्मुस्ततो दीनमिदं दिनं किम्॥ २३॥
(लक्ष्मणस्यैतौ)

अथ **वसन्तसंधिः**—

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम्॥ २४॥
(कालिदासस्य)

आपृच्छन्ते मलयजतरूनास्वजन्ते च वल्ली-
राभाषन्ते चिरपरिचितान्मालिनीनिर्झरौघान्।
अद्य स्थित्वा द्रविडमहिलामन्दिरे श्वः प्रभाते
प्रस्थातारो मलयमरुतः कुर्वते संविधानम्॥ २५॥
अनुभूतचरेषु दीर्घिकाणामुपकण्ठेषु गतागतैकतानाः।
मधुपाः कथयन्ति पद्मिनीनां सलिलैरन्तरितानि कोरकाणि॥ २६॥
उषसि भ्रमरयुवानः स्वप्ने दृष्ट्वा सरोजसाम्राज्यम्।
गतकल्पकुन्दतल्पाः सरसीसलिलानि जिघ्रन्ति॥ २७॥
(केषामप्येते)

व्यतीतकल्पे शिशिरैकबाल्ये संकल्पपुष्पोद्गमबन्धुराङ्गी।
इयं लवङ्गी युवभृङ्गसङ्गादुच्छूनगुच्छस्तनिकेव भाति॥ २८॥

१ महिषस्य.

भृङ्गीरवो मङ्गलगीतमासीत्पिकध्वनिर्दुन्दुभितामयासीत् ।
प्रस्थातुकामस्य जगज्जयाय स्मराज्ञया हन्त वसन्तकस्य ॥ २९ ॥

( लक्ष्मणस्यैतौ )

अथ **वसन्तः**—

प्रयान्ति (प)पान्थास्त्वरया गृहाणि भवत्कृतान्तश्चरते वसन्तः ।
इतीव भृङ्गारवतो रसालैः संताड्यते किं पटहः पिकोऽयम् ॥ ३० ॥

( लक्ष्मणस्य )

स्थलकमलतरूणां कामिनीलोचनेषु
क्षिपति मुकुलमुष्ट्या धूलिजातं विशालम् ।
तदनु हरति हन्त स्वान्तसर्वस्वमासा-
मयमनयविदग्धो धूर्तवन्मीनकेतुः ॥ ३१ ॥

( गणपतेः )

कामस्य जेतुकामस्य मिलनाय महीपतेः ।
देवो मीनं त्विषां मीने द्वारीकर्तुमिवाययौ ॥ ३२ ॥

उत्स्रष्टुमम्बुजदृशामिव मानरत्न-
मादाय षट्पदतिलान्मधुवारिपूरान् ।
पुंस्कोकिलस्य कलकूजितकैतवेन
संकल्पवाक्यमयमातनुते रसालः ॥ ३३ ॥

रणत्कङ्कणानां झणन्नूपुराणां चलत्कुण्डलानां क्वणत्किङ्किणीनाम् ।
वधूनां मुखाम्भोरुहं द्रष्टुकामो रथं मन्थरं चक्रबन्धुश्चकार ॥ ३४ ॥

( भानुकरस्यैते )

अथ **ग्रीष्मः**—

निदाघकाले किल चण्डरश्मिप्रचण्डरश्मिप्रकरावलीढम् ।
स्यादेव दग्धं जगदेव न स्याद्यदि स्रवत्स्वेदजलावलीनम् ॥ ३५ ॥
स्वदेहघर्मोदकपिच्छलेऽस्मिन्नभःस्थले किं तरणेस्तुरङ्गाः ।
स्खलत्खुरा न त्वरया विचेलुस्ततो नु दीर्घा दिवसा निदाघे ॥ ३६ ॥

( द्वौ लक्ष्मणस्य )

भृङ्गीरवो मङ्गलगीतमासीत्पिकध्वनिर्दुन्दुभितामयासीत् ।
प्रस्थातुकामस्य जगज्जयाय स्मराज्ञया हन्त वसन्तकस्य ॥ २९ ॥

( लक्ष्मणस्यैतौ )

अथ **वसन्तः**—

प्रयान्ति (प)पान्थास्त्वरया गृहाणि भवत्कृतान्तश्चरते वसन्तः ।
इतीव भृङ्गारवतो रसालैः संताड्यते किं पटहः पिकोऽयम् ॥ ३० ॥

( लक्ष्मणस्य )

स्थलकमलतरूणां कामिनीलोचनेषु
क्षिपति मुकुलमुष्ट्या धूलिजातं विशालम् ।
तदनु हरति हन्त स्वान्तसर्वस्वमासा-
मयमनयविदग्धो धूर्तवन्मीनकेतुः ॥ ३१ ॥

( गणपतेः )

कामस्य जेतुकामस्य मिलनाय महीपतेः ।
देवो मीनं त्विषां मीने द्वारीकर्तुमिवाययौ ॥ ३२ ॥

उत्स्रष्टुमम्बुजदृशामिव मानरत्न-
मादाय षट्(प)दतिलान्मधुवारिपूरान् ।
पुंस्कोकिलस्य कलकूजितकैतवेन
संकल्पवाक्यमयमातनुते रसालः ॥ ३३ ॥

रणत्कङ्कणानां झणन्नूपुराणां चलत्कुण्डलानां क्वणत्किङ्किणीनाम् ।
वधूनां मुखाम्भोरुहं द्रष्टुकामो रथं मन्थरं चक्रबन्धुश्चकार ॥ ३४ ॥

( भानुकरस्यैते )

अथ **ग्रीष्मः**—

निदाघकाले किल चण्डरश्मिप्रचण्डरश्मिप्रकरावलीढम् ।
स्यादेव दग्धं जगदेव न स्याद्यदि स्रवत्स्वेदजलावलीनम् ॥ ३५ ॥
स्वदेहघर्मोदकपिच्छलेऽस्मिन्नभःस्थले किं तरणेस्तुरङ्गाः ।
स्खलत्खुरा न त्वरया विचेलुस्ततो नु दीर्घा दिवसा निदाघे ॥ ३६ ॥

( द्वौ लक्ष्मणस्य )

माध्वीकदुर्भिक्षमलिद्विजानां प्रदोषकालः पिकपण्डितानाम्।
जरालवो मन्मथनायकस्य निदाघकालः समुपाजगाम ॥ ३७ ॥

(गदाधरस्य)

तप्ता मही विरहिणामिव चित्तवृत्ति-
स्तृष्णाध्वगेषु कृपणेष्विव वृद्धिमेति।
सूर्यः करैर्दहति दुर्वचनैः खलो नु
छाया सतीव न विमुञ्चति पादमूलम् ॥ ३८ ॥

(कस्यापि)

अथ संसारसंहारवामनाबन्धवासितः।
अजायत वृषारूढो भैरवो महसां निधिः ॥ ३९ ॥
अत्युल्लसद्विसरहस्ययुजा भुजेन
वक्रेण शारदसुधांशुसहोदरेण।
पीयूषपोषसुभगेन च भाषितेन
त्वं चेत्प्रसीदसि मृगाक्षि कुतो निदाघः ॥ ४० ॥
मलयपवनचञ्चच्चन्दनस्पन्दशीतं
जलनिधितनयायाः कण्ठमालिङ्ग्य दोर्भ्याम्।
दिनकरकरजालज्वालया दूनदेहो
जलधिपयसि देवो वासुदेवो निदद्रौ ॥ ४१ ॥

(एते भानुकरस्य)

इति श्रीआक्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचना**यां द्वादशो व्यापारः।

---

त्रयोदशो व्यापारः।

शृङ्गारस्य निरूपितकल्पत्वादल्पतया हास्यरसादयोऽपि निरूप्यन्ते—

अथ **हास्यरसः**—

प्रीतः प्रकाममहिफेनरसं निपीय
वृद्धो वृतः शिशुगणैः प्रलपन्वचांसि।

माध्वीकदुर्भिक्षमलिद्विजानां प्रदोषकालः पिकपण्डितानाम् ।
जरालवो मन्मथनायकस्य निदाघकालः समुपाजगाम ॥ ३७ ॥

( गदाधरस्य )

तप्ता मही विरहिणामिव चित्तवृत्ति-
स्तृष्णाध्वगेषु कृपणेष्विव वृद्धिमेति ।
सूर्यः करैर्दहति दुर्वचनैः खलो नु
छाया सतीव न विमुञ्चति पादमूलम् ॥ ३८ ॥

( कस्यापि )

अथ संसारसंहारवामनाबन्धवासितः ।
अजायत वृषारूढो भैरवो महसां निधिः ॥ ३९ ॥

अत्युल्लसद्विसरहस्ययुजा भुजेन
वक्रेण शारदसुधांशुसहोदरेण ।
पीयूषपोषसुभगेन च भाषितेन
त्वं चेत्प्रसीदसि मृगाक्षि कुतो निदाघः ॥ ४० ॥

मलयपवनचञ्चच्चन्दनस्पन्दशीतं
जलनिधितनयायाः कण्ठमालिङ्ग्य दोर्भ्याम् ।
दिनकरकरजालज्वालया दूनदेहो
जलधिपयसि देवो वासुदेवो निदद्रौ ॥ ४१ ॥

( एते भानुकरस्य )

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचना**यां द्वादशो व्यापारः ।

---

त्रयोदशो व्यापारः ।

शृङ्गारस्य निरूपितकल्पत्वादल्पतया हास्यरसादयोऽपि निरूप्यन्ते—

अथ **हास्यरसः**—

प्रीतः प्रकाममहिफेनरसं निपीय
वृद्धो वृतः शिशुगणैः प्रलपन्वचांसि ।

आघूर्णयन्नयनमाकुलयन्मुखेन्दु-
मुद्भ्रामयन्वपुरुपैति नृपस्य वेश्म ॥ १ ॥
(भानुकरस्य)

उपभुक्तखदिरवीटकजनिताधररागभङ्गभयात् ।
पितरि मृतेऽपि हि वेश्या रोदिति हा तात तातेति ॥ २ ॥
(क्षेमेन्द्रस्य)

सामगायनपूतं मे नोच्छिष्टमधरं कुरु ।
उत्कण्ठितासि चेद्भद्रे कर्णं चुम्बस्व दक्षिणम् ॥ ३ ॥
(कयोरपि)

रे रे लोकाः कुरुध्वं श्रवणपुटविधानं द्रुतं हस्तयुग्मैः
शैलाः सर्वेऽपि यूयं भवत गुरुतराः सावधाना धरित्र्याम् ।
शीघ्रं रे रावण त्वं विरचय वसनैर्नासिकानां पिधानं
सुप्तोऽयं कुम्भकर्णः कटुरवविकटं शर्धते दीर्घमुच्चैः ॥ ४ ॥

गताः केचित्प्रबोधाय स्वपन्तं कुम्भकर्णकम् ।
तदधः पवनोत्सर्गादुड्डीय पतिताः क्वचित् ॥ ५ ॥
(लक्ष्मणस्यैतौ)

अथ **करुणरसः**—

कनकमृगमुदस्य स्वां कुटीं संप्रविष्टः
क्वचिदपि न वधूटीं नो(सं)ददर्शाङ्गनादौ ।
तदपि स रघुवीरः पर्णशालागृहान्त-
र्न विशति हृदयाशातन्तुनाशातिभीरुः ॥ ६ ॥
(लक्ष्मणस्य)

अनुवनमनुयान्तं बाष्पवारि त्यजन्तं
मृदितकमलदाम क्षाममालोक्य रामम् ।
दिनमपि रविरोचिस्तापमन्तः प्रपेदे
रजनिरपि च ताराबाष्पबिन्दून्बभार ॥ ७ ॥
(भानुकरस्य)

१. अत्रात्मनेपदं चिन्त्यम्.

आघूर्णयन्नयनमाकुलयन्मुखेन्दु-
मुद्भ्रामयन्वपुरुपैति नृपस्य वेश्म ॥ १ ॥

( भानुकरस्य )

उपभुक्तखदिरवीटकजनिताधररागभङ्गभयात् ।
पितरि मृतेऽपि हि वेश्या रोदिति हा तात तातेति ॥ २ ॥

( क्षेमेन्द्रस्य )

सामगायनपूतं मे नोच्छिष्टमधरं कुरु ।
उत्कण्ठितासि चेद्भद्रे कर्णं चुम्बस्व दक्षिणम् ॥ ३ ॥

( कयोरपि )

रे रे लोकाः कुरुध्वं श्रवणपुटविधानं द्रुतं हस्तयुग्मैः
शैलाः सर्वेऽपि यूयं भवत गुरुतराः सावधाना धरित्र्याम् ।
शीघ्रं रे रावण त्वं विरचय वसनैर्नासिकानां पिधानं
सुप्तोऽयं कुम्भकर्णः कटुरवविकटं शर्धते दीर्घमुच्चैः ॥ ४ ॥
गताः केचित्प्रबोधाय स्वपन्तं कुम्भकर्णकम् ।
तदधः पवनोत्सर्गादुड्डीय पतिताः क्वचित् ॥ ५ ॥

( लक्ष्मणस्यैतौ )

अथ **करुणरसः**—

कनकमृगमुदस्य स्वां कुटीं संप्रविष्टः
क्वचिदपि न वधूटीं नो(सं)ददर्शाङ्गनादौ ।
तदपि स रघुवीरः पर्णशालागृहान्त-
र्न विशति हृदयाशातन्तुनाशातिभीरुः ॥ ६ ॥

( लक्ष्मणस्य )

अनुवनमनुयान्तं बाष्पवारि त्यजन्तं
मृदितकमलदाम क्षाममालोक्य रामम् ।
दिनमपि रविरोचिस्तापमन्तः प्रपेदे
रजनिरपि च ताराबाष्पबिन्दून्बभार ॥ ७ ॥

( भानुकरस्य )

१. अत्रात्मनेपदं चिन्त्यम्.

सीतामपास्य त्रपया नतास्यं समागतं लक्ष्मणमानिरीक्ष्य ।
बभूव बाष्पाम्बुधिमध्यलीनो दृगन्तमीनो रघुनन्दनस्य ॥ ८ ॥
( कस्यापि )

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कंदर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ ९ ॥
( भवभूतेः )

शीलानि ते चन्दनशीतलानि श्रुतानि भूमीतलविश्रुतानि ।
तथापि जीर्णौ पितरौ वनेऽसिन्विहाय हा वत्स कथं प्रयासि ॥ १० ॥
( गदाधरस्य )

अविशीर्णकान्तपत्रे नव्यदशे सुमुखि संभृतस्नेहे ।
मद्गेहदीपकलिके कथमुपयातासि निर्वाणम् ॥ ११ ॥
( लीलावतीकारस्य )

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं दीना ज्वलन्तीमधुना [ चिताम् ] ॥ १२ ॥
( दण्डिनः )

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ १३ ॥
( कालिदासस्य )

आदाय मांसमखिलं स्तनवर्जमङ्गा-
न्मां मुञ्च वागुरिक यामि कुरु प्रसादम् ।
सीदन्ति शष्पकवलग्रहणानभिज्ञा
मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ १४ ॥
( कस्यापि )

अथ **रौद्ररसः**—

देह्याज्ञां विज्ञ राज्ञां कुलमुकुटमणे राम लङ्काधिनाथं
मश्नीयां चास्तपाथोनिधिमथ मरुतां प्रापये किंनु लङ्काम् ।

सीतामपास्य त्रपया नतास्यं समागतं लक्ष्मणमानिरीक्ष्य ।
बभूव बाष्पाम्बुधिमध्यलीनो दृगन्तमीनो रघुनन्दनस्य ॥ ८ ॥
( कस्यापि )

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कंदर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ ९ ॥
( भवभूतेः )

शीलानि ते चन्दनशीतलानि श्रुतानि भूमीतलविश्रुतानि ।
तथापि जीर्णौ पितरौ वनेऽसिन्विहाय हा वत्स कथं प्रयासि ॥ १० ॥
( गदाधरस्य )

अविशीर्णकान्तपत्रे नव्यदशे सुमुखि संभृतस्नेहे ।
मद्गेहदीपकलिके कथमुपयातासि निर्वाणम् ॥ ११ ॥
( लीलावतीकारस्य )

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं दीना ज्वलन्तीमधुना [ चिताम् ] ॥ १२ ॥
( दण्डिनः )

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ १३ ॥
( कालिदासस्य )

आदाय मांसमखिलं स्तनवर्जमङ्गा-
न्मां मुञ्च वागुरिक यामि कुरु प्रसादम् ।
सीदन्ति शष्पकवलग्रहणानभिज्ञा
मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ १४ ॥
( कस्यापि )

**अथ रौद्ररसः—**

देह्याज्ञां विज्ञ राज्ञां कुलमुकुटमणे राम लङ्काधिनाथं
मच्चीयां चास्तपाथोनिधिमथ मरुतां प्रापये किंनु लङ्काम् ।

यद्वा मद्बाहुदण्डोद्यमितपृथुतरक्षोणिभृत्क्षेपभिद्य-
द्वक्षःसंक्षुब्धरक्षःकरनिकरकृतस्फारचीत्कारघोराम् ॥ १५ ॥
(लक्ष्मणस्य)

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ १६ ॥
(नारायणस्य)

केयं माता पिशाची क इव च जनको भ्रातरः केऽत्र कीटा।
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी।
आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः ॥ १७
(कृष्णमिश्रस्य)

क्रीडातुङ्गतुरङ्गटापपटलीखर्वीकृतोर्वीधर-
श्रेणिस्फूर्जितधूलिधोरणितमः सोमावलीढं जगत्।
युद्धक्रुद्धकरीन्द्रवृन्दचरणव्याभुग्नभोगीश्वर-
व्यग्रोदग्रफणाग्ररत्नरुचिभिर्विद्योतयामः पुनः ॥ १८ ॥
(भानुकरस्य)

अथ **वीररसः**—

संग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं
सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम्।
श्रीरामेण परंतु पीनपुलकस्फूर्जत्प्रकोष्ठश्रिया
सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥ १९ ॥
(भानुकरस्य)

अथ **भयानकरसः**—

स्फूर्जद्भुजाविंशतिकं समन्तात्समुल्लसद्भीषणवक्त्रपङ्क्तिम्।
दृष्ट्वैव रौद्रं दशवक्त्रदेहं सीतातिभीता बत मूर्च्छितासीत् ॥ २०
(लक्ष्मणस्य)

यद्वा मद्बाहुदण्डोद्यमितपृथुतरक्षोणिभृत्क्षेपभिद्य-
द्वक्षःसंक्षुब्धरक्षःकरनिकरकृतस्फारचीत्कारघोराम् ॥ १५ ॥
( लक्ष्मणस्य )

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ १६ ॥
( नारायणस्य )

केयं माता पिशाची क इव च जनको भ्रातरः केऽत्र कीटा।
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी।
आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः ॥ १७
( कृष्णमिश्रस्य )

क्रीडातुङ्गतुरङ्गटापपटलीखर्वीकृतोर्वीधर-
श्रेणिस्फूर्जितधूलिधोरणितमः सोमावलीढं जगत्।
युद्धक्रुद्धकरीन्द्रवृन्दचरणव्याभुग्नभोगीश्वर-
व्यग्रोदग्रफणाग्ररत्नरुचिभिर्विद्योतयामः पुनः ॥ १८ ॥
( भानुकरस्य )

अथ **वीररसः**—

संग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं
सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम्।
श्रीरामेण परंतु पीनपुलकस्फूर्जत्प्रकोष्ठश्रिया
सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥ १९ ॥
( भानुकरस्य )

अथ **भयानकरसः**—

स्फूर्जद्भुजाविंशतिकं समन्तात्समुल्लसद्भीषणवक्त्रपङ्क्तिम्।
दृष्ट्वैव रौद्रं दशवक्त्रदेहं सीतातिभीता बत मूर्च्छितासीत् ॥ २०
( लक्ष्मणस्य )

किंचित्कोपकलाकलापकलनाहुंकारदृप्यद्भ्रुवो-
विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम् ।
क्रन्दत्फेरु रटत्करी(रे)ट्ट विघटद्दारु स्फुटद्गुग्गुलु
प्रोत्क्रीडत्कपि निःश्वसत्फणि रणज्झिल्लि भ्रमद्द्वीपि च ॥ २१ ॥
( वररुचेः ) [मुरारेः]

अथ **बीभत्सरसः**—

फेत्कारकृत्फेरुभिरङ्घ्रिजुष्टं श्वभिर्विलुब्धैरथ जग्धपृष्ठम् ।
आ पक्षिभिर्भक्षितसर्वनासमासीद्वपुस्तद्दशकंधरस्य ॥ २२ ॥
( लक्ष्मणस्य )

विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा
निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निबिडगृध्रजालं जनै-
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥ २३ ॥
( इन्द्रकवेः )

अथाद्भुतरसः—

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥ २४ ॥
( कस्यापि )

अथाद्भुतपर्यवसानात्युक्तिः—

आकाशदेशात्परिपातुकानि लङ्केशशीर्षाणि सकुन्तलानि ।
क्षणं नभःप्रांशुमहीरुहस्य शिक्याश्रितानीव फलानि रेजुः ॥ २५ ॥
( लक्ष्मणस्य )

दिव्यहरेर्मुखकुहरे पर्णति व्योम चूर्णति चन्द्रः ।
क्रमुकति कनकगिरिः खदिरसारति खरांशुः ॥ २६ ॥
( भानुकरस्य )

अथ **शान्तरसः**—

नमस्तस्मै करालाय कालाय क्षुधितात्मने ।
जगन्ति भुञ्जतो यस्य ब्रह्मग्रासोऽवधिर्भुजे ॥ २७ ॥

किंचित्कोपकलाकलापकलनाहुंकारदप्यद्भ्रुवो-
विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम् ।
क्रन्दत्फेरु रटत्करी(रे)ट्टु विघटद्दारु स्फुटद्गुग्गुलु
प्रोत्क्रीडत्कपि निःश्वसत्फणि रणज्झिल्लि भ्रमद्द्वीपि च ॥ २१ ॥
( वररुचेः ) [मुरारेः]

अथ **बीभत्सरसः**—
फेत्कारकृत्फेरुभिरङ्घ्रिजुष्टं श्वभिर्विलुब्धैरथ जग्धपृष्ठम् ।
आ पक्षिभिर्भक्षितसर्वनासमासीद्वपुस्तद्दशकंधरस्य ॥ २२ ॥
( लक्ष्मणस्य )

विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा
निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निबिडगृध्रजालं जनै-
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥ २३ ॥
( इन्द्रकवेः )

**अथाद्भुतरसः**—
विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥ २४ ॥
( कस्यापि )

**अथाद्भुतपर्यवसानात्युक्तिः**—
आकाशदेशात्परिपातुकानि लङ्केशशीर्षाणि सकुन्तलानि ।
क्षणं नभःप्रांशुमहीरुहस्य शिक्याश्रितानीव फलानि रेजुः ॥ २५ ॥
( लक्ष्मणस्य )

दिव्यहरेर्मुखकुहरे पर्णति व्योम चूर्णति चन्द्रः ।
क्रमुकति कनकगिरिः खदिरसारति खरांशुः ॥ २६ ॥
( भानुकरस्य )

अथ **शान्तरसः**—
नमस्तस्मै करालाय कालाय क्षुधितात्मने ।
जगन्ति भुञ्जतो यस्य ब्रह्मग्रासोऽवधिर्भुजे ॥ २७ ॥

पुनः पुनर्भुवि क्षिप्तः पुनरेति स्वसंनिधिम् ।
मन्दकन्दुकवज्जातो मृत्योः क्रीडनकं नरः ॥ २८ ॥
जन्तुः संसारकान्तारे कालव्यालभयंकरे ।
प्रविशन्नेव कोऽनेन नो नृशंसेन दंशितः ॥ २९ ॥
नराः संसारकान्तारे विषयांश्चपलान्मृगान् ।
व्याधा इव प्रधावन्तो यान्ति व्याघ्रान्तकान्तिकम् ॥ ३० ॥
तरले जीवने जन्तुर्भोगान्भोक्तुं य ईहते ।
स नूनं तडिदुद्योते मणीन्ग्रथितुमीहते ॥ ३१ ॥
यः स्वोद्धाराय गृह्णाति मूढो यान्यान्परिग्रहान् ।
सार्धं मज्जति तैः पङ्के मग्नेभाङ्घ्रिरिवेतरैः ॥ ३२ ॥
मायया कर्षिता ह्येते न चोह्य(ज्झ्य)न्ते मिथस्तथा ।
पुनर्यथा न मुच्यन्ते तुर्येव पटतन्तवः ॥ ३३ ॥
भङ्गदं भङ्गुरं भोगं गत्वरं सत्वरं धनम् ।
भज मा भज मावासं तमीश्वरमनश्वरम् ॥ ३४ ॥
उद्यद्विवेकतपनप्रफुल्ले हृदयाम्बुजे ।
विशते भगवद्भक्तिररविन्द इवेन्दिरा ॥ ३५ ॥
संसारतापदहनैः प्रतप्तायां मनोभुवि ।
सम्यग्रोहन्ति भगवद्भक्तिबीजाङ्कुरा इमे ॥ ३६ ॥
उपरिस्था भक्तिरन्तर्निर्मूला तारयेत्कथम् ।
नहि भारक्षमा दृष्टा वारां सान्द्रापि नीलिका ॥ ३७ ॥
धर्मे सक्तिर्भवे भक्तिर्भवेऽरक्तिर्वरत्रयम् ।
चतुर्थपुरुषार्थाय चतुर्थं तीर्थवर्तनम् ॥ ३८ ॥
तन्मनस्विन्मनः स्वीयं दिक्पर्यटनलम्पटम् ।
दुर्मर्कटमिव क्षिप्रं स्थाणौ बद्धं स्थिरीकुरु ॥ ३९ ॥

( एते लक्ष्मणस्य )

१. अत्रात्मनेपदं चिन्त्यम्.

पुनः पुनर्भुवि क्षिप्तः पुनरेति स्वसंनिधिम् ।
मन्दकन्दुकवज्जातो मृत्योः क्रीडनकं नरः ॥ २८ ॥
जन्तुः संसारकान्तारे कालव्यालभयंकरे ।
प्रविशन्नेव कोऽनेन नो नृशंसेन दंशितः ॥ २९ ॥
नराः संसारकान्तारे विषयांश्चपलान्मृगान् ।
व्याधा इव प्रधावन्तो यान्ति व्याघ्रान्तकान्तिकम् ॥ ३० ॥
तरले जीवने जन्तुर्भोगान्भोक्तुं य ईहते ।
स नूनं तडिदुद्योते मणीन्ग्रथितुमीहते ॥ ३१ ॥
यः स्वोद्धाराय गृह्णाति मूढो यान्यान्परिग्रहान् ।
सार्धं मज्जति तैः पङ्के मग्नेभाङ्घ्रिरिवेतरैः ॥ ३२ ॥
मायया कर्षिता ह्येते न चोद्य(ज्ञ्य)न्ते मिथस्तथा ।
पुनर्यथा न मुच्यन्ते तुर्येव पटतन्तवः ॥ ३३ ॥
भङ्गदं भङ्गुरं भोगं गत्वरं सत्वरं धनम् ।
भज मा भज मावासं तमीश्वरमनश्वरम् ॥ ३४ ॥
उद्यद्विवेकतपनप्रफुल्ले हृदयाम्बुजे ।
विशते भगवद्भक्तिररविन्द इवेन्दिरा ॥ ३५ ॥
संसारतापदहनैः प्रतप्तायां मनोभुवि ।
सम्यग्रोहन्ति भगवद्भक्तिबीजाङ्कुरा इमे ॥ ३६ ॥
उपरिस्था भक्तिरन्तर्निर्मूला तारयेत्कथम् ।
नहि भारक्षमा दृष्टा वारां सान्द्रापि नीलिका ॥ ३७ ॥
धर्मे सक्तिर्भवे भक्तिर्भवेऽरक्तिर्वरत्रयम् ।
चतुर्थपुरुषार्थाय चतुर्थं तीर्थवर्तनम् ॥ ३८ ॥
तन्मनस्विन्मनः स्वीयं दिक्पर्यटनलम्पटम् ।
दुर्मर्कटमिव क्षिप्रं स्थाणौ बद्धं स्थिरीकुरु ॥ ३९ ॥

( एते लक्ष्मणस्य )

---

१. अत्रात्मनेपदं चिन्त्यम्.

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति नित्यम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ४० ॥
यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ४१ ॥
उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥४२॥
अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ४३ ॥
अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ४४ ॥
( भर्तृहरेरेते )

बन्धुव्रजैः सुभटकोटिभिराप्तवर्गै-
र्मन्त्रास्त्रतन्त्रविधिभिः परिरक्ष्यमाणः ।
जन्तुर्बलादधिबलोपकृतान्तदूतै-
रानीयतेऽयमवशाय वराक एषः ॥ ४५ ॥
दैवाद्धनेष्वधिगतेषु पटुर्न कायः
काये पटौ न पुनरायदवाप्ति वित्तम् ।
इत्थं परस्परहतात्मभिरात्मधर्मै-
र्लोकं सुदुःखयति जन्मकरः प्रबन्धः ॥ ४६ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति नित्यम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ४० ॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ४१ ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥४२॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ४३ ॥

अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ४४ ॥

( भर्तृहरेरेते )

बन्धुव्रजैः सुभटकोटिभिराप्तवर्गै-
र्मन्त्रास्त्रतन्त्रविधिभिः परिरक्ष्यमाणः ।
जन्तुर्बलादधिबलोपकृतान्तदूतै-
रानीयतेऽयमवशाय वराक एषः ॥ ४५ ॥

दैवाद्धनेष्वधिगतेषु पटुर्न कायः
काये पटौ न पुनरायदवाप्ति वित्तम् ।
इत्थं परस्परहतात्मभिरात्मधर्मै-
र्लोकं सुदुःखयति जन्मकरः प्रबन्धः ॥ ४६ ॥

आस्तां भवान्तरविधौ सुविपर्ययोऽय-
मत्रैव जन्मनि नृणामधरोच्चभावः ।
अल्पः पृथुः पृथुरपि क्षणतोऽल्प एव
स्वामी भवत्यनुचरः स च तत्पदार्हः ॥ ४७ ॥
एकस्त्वमावहसि जन्मनि संक्षये च
भोक्तुं स्वयं स्वकृतकर्मफलानुबन्धम् ।
अन्यो न जातु सुखदुःखविधौ सहायः
स्वाजीवनाय मिलितं विटपेटकं ते ॥ ४८ ॥
बाह्यः परिग्रहविधिस्तव दूरमास्तां
देहोऽयमेति न समं सहसंभवोऽपि ।
किं ताम्यसि त्वमनिशं क्षणदृष्टनष्टै-
र्दारात्मजद्रविणमन्दिरमोहपाशैः ॥ ४९ ॥
संशोच्य शोकविदसौ दिवसं तमेक-
मन्येद्युरापर.........स्वजनतवस्वे (?) ।
कायोऽपि भस्म भवति प्रचयार्चिषाग्नेः
संसारयन्त्रघटनाघटने त्वमेकः(?) ॥ ५० ॥
(एते सोमदेवस्य)
केनाप्यनर्थरुचिना कपटं प्रयुक्त-
मेतत्सुहृत्स्वजनबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ ५१ ॥
बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः ।
हातव्योऽयमसार एष विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ५२ ॥
आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।

आस्तां भवान्तरविधौ सुविपर्ययोऽय-
मत्रैव जन्मनि नृणामधरोच्चभावः ।
अल्पः पृथुः पृथुरपि क्षणतोऽल्प एव
स्वामी भवत्यनुचरः स च तत्पदार्हः ॥ ४७ ॥
एकस्त्वमावहसि जन्मनि संक्षये च
भोक्तुं स्वयं स्वकृतकर्मफलानुबन्धम् ।
अन्यो न जातु सुखदुःखविधौ सहायः
स्वाजीवनाय मिलितं विटपेटकं ते ॥ ४८ ॥
बाह्यः परिग्रहविधिस्तव दूरमास्तां
देहोऽयमेति न समं सहसंभवोऽपि ।
किं ताम्यसि त्वमनिशं क्षणदृष्टनष्टै-
र्दारात्मजद्रविणमन्दिरमोहपाशैः ॥ ४९ ॥
संशोच्य शोकविदसौ दिवसं तमेक-
मन्येद्युरापर·········स्वजनतवस्वे (?) ।
कायोऽपि भस्म भवति प्रचयार्चिषाग्नेः
संसारयन्त्रघटनाघटने त्वमेकः(?) ॥ ५० ॥
( एते सोमदेवस्य )
केनाप्यनर्थरुचिना कपटं प्रयुक्त-
मेतत्सुहृत्स्वजनबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ ५१ ॥
बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः ।
हातव्योऽयमसार एष विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ५२ ॥
आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।

न प्राप्तानि पुरा न संप्रति न च प्राप्तो दृढः प्रत्ययो
वाञ्छामोऽत्र परिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥५३॥
अजानन्दाहार्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा वृतम(व)लिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान्वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ५४ ॥
क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ ५५ ॥
जन्मेदं वध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥ ५६ ॥
कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
धनिषु न दैन्यं विदधति ते खलु पशवो वयं सुधियः ॥ ५७ ॥
महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
पारं दुःखाम्बुधेर्गन्तुं तर यावन्न भिद्यते ॥ ५८ ॥
उपश········विद्या बीजात्फलं धनमिच्छतां
भवति विफलो यत्प्रारम्भस्तदत्र किमद्भुतम् ।
नियतविषया ह्येते भावा नयन्ति विपर्ययं
जनयति····शाले बीजं न जातु यवाङ्कुरम् ॥ ५९ ॥
स्थूलप्रावरणोऽतिवृत्तकथनः कासाश्रुलालाविलो
भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् ।
शृण्वन्धृष्टवधूवचांसि धनुषा संत्रासयन्वायसा-
नाशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति ॥ ६० ॥
(एते बिह्लणशतकात्)

मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ ६१ ॥

न प्राप्तानि पुरा न संप्रति न च प्राप्तो दृढः प्रत्ययो
वाञ्छामोऽत्र परिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥५३॥
अजानन्दाहार्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा वृतम(ब)लिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान्वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ५४ ॥
क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ ५५ ॥
जन्मेदं वध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥ ५६ ॥
कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
धनिषु न दैन्यं विदधति ते खलु पशवो वयं सुधियः ॥ ५७ ॥
महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
पारं दुःखाम्बुधेर्गन्तुं तर यावन्न भिद्यते ॥ ५८ ॥
उपश·······विद्या बीजात्फलं धनमिच्छतां
भवति विफलो यत्प्रारम्भस्तदत्र किमद्भुतम् ।
नियतविषया ह्येते भावा नयन्ति विपर्ययं
जनयति····शाले बीजं न जातु यवाङ्कुरम् ॥ ५९ ॥
स्थूलप्रावरणोऽतिवृत्तकथनः कासाश्रुलालाविलो
भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् ।
शृण्वन्धृष्टवधूवचांसि धनुषा संत्रासयन्वायसा-
नाशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति ॥ ६० ॥
( एते बिह्लणशतकात् )

मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ ६१ ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ६२ ॥
( श्रीभर्तृहरेः )

सवेदो निर्वेदमृतिपण्डितै रतिजडस्य·······संभावनव्यसौ (?)
················तदधुना मनाक् हसति हतान् पण्डितान् ॥ ६३ ॥
( लक्ष्मणस्य )

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥
················माणो भ्रमान्मद्विरहे स्थिता स्यात् ।
शाकुन्तिका क्वापि मिथोऽथ पोतान्विधाय नीडं निबिडं कदा वा ॥६४।
कुचौ तु परिचर्चितौ परिचितं चिरं चन्दनं
कृताः परमुरोजयोः परिसरेऽरविन्दस्रजः ।
स्तुतिर्नतिरपि स्मृतिर्वरतनोः कृतैवादरा-
दिदं तु निखिलं मया विरचितं पुनर्नेश्वरे ॥ ६५ ॥
चिरं ध्याता रामा क्षणमपि न रामप्रतिकृतिः
परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम् ।
नता रुष्टा रामा यदरचि न रामाय विनति-
र्गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ॥ ६६ ॥
( एते लक्ष्मणस्य )

पुत्रमन्दिरकलत्रमेदुरं मे दुरन्तमिव भासितं जगत् ।
तन्निवेदय दयामनोहरं [ संतरं ] स्मरसि चेतसा कुतः ॥ ६७ ।
( भानुकरस्य )

निधानमानन्दनिधेरिदानीं चिदां निदानं भज वा भवानीम् ।
कर्पूरगौरं भज शूलिनं वा नीलाम्बुदाभं वनमालिनं वा ॥ ६८ ॥
( लक्ष्मणस्य )

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ पद्यरचनायां त्रयोदशो व्यापारः ।

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ६२ ॥

( श्रीभर्तृहरेः )

सवेदो निर्वेदस्मृतिपण्डितै रतिजडस्य·······संभावनव्यसौ (?)
···············तदधुना मनाक् हसति हतान् पण्डितान् ॥ ६३ ॥

( लक्ष्मणस्य )

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥
················माणो भ्रमान्मद्विरहे स्थिता स्यात् ।
शाकुन्तिका क्वापि मिथोऽथ पोतान्विधाय नीडं निबिडं कदा वा ॥६४॥

कुचौ तु परिचर्चितौ परिचितं चिरं चन्दनं
कृताः परमुरोजयोः परिसरेऽरविन्दस्रजः ।
स्तुतिर्नतिरपि स्मृतिर्वरतनोः कृतैवादरा-
दिदं तु निखिलं मया विरचितं पुनर्नेश्वरे ॥ ६५ ॥

चिरं ध्याता रामा क्षणमपि न रामप्रतिकृतिः
परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम् ।
नता रुष्टा रामा यदरचि न रामाय विनति-
र्गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ॥ ६६ ॥

( एते लक्ष्मणस्य )

पुत्रमन्दिरकलत्रमेदुरं मे दुरन्तमिव भासितं जगत् ।
तन्निवेदय दयामनोहरं [ संतरं ] स्मरसि चेतसा कुतः ॥ ६७ ।

( भानुकरस्य )

निधानमानन्दनिधेरिदानीं चिदां निदानं भज वा भवानीम् ।
कर्पूरगौरं भज शूलिनं वा नीलाम्बुदाभं वनमालिनं वा ॥ ६८ ॥

( लक्ष्मणस्य )

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ पद्यरचनायां त्रयोदशो व्यापारः ।

चतुर्दशो व्यापारः ।

चिरं बुध्या विरचितान्कविभिः·········
धन्यानन्यापदेशांस्ताना··················· ॥ १ ॥

अथ **कल्पद्रुमः**—

विवेकविधुरं किलानुचितमेव कल्पद्रुम
द्रुमाधिप कृतं त्वया वितरणैकचेतस्तया ।
समं वदति पण्डितैरतिजडस्य संभावना-
मसौ तदधुना मनाग्हसति हन्त तान्पण्डितान् ॥ २ ॥
( लक्ष्मणः )

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ ३ ॥
( कस्यापि )

अथ **चम्पकः**—

साधारणतरुबुध्या न मया बद्धस्तवालवालोऽपि ।
लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥ ४ ॥

भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ५ ॥

कोपं चम्पक मुञ्च याचकजनैरायासितस्त्वं सखे
मा म्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् ।
कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तदा कुप्यतां
येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥ ६ ॥

अथ **केसरतरुः**—

[संभावितो न] तरुणीकरपल्लवेन
सिक्तोसि नेन्दुवदनावदनासवेन ।
कुग्रामपामरनिकेतनसंनिधाने
केनेह केसरतरो बत रोपितोऽसि ॥ ७ ॥

चतुर्दशो व्यापारः ।

चिरं बुध्या विरचितान्कविभिः........

धन्यानन्यापदेशांस्ताना.................... ॥ १ ॥

अथ **कल्पद्रुमः**—

विवेकविधुरं किलानुचितमेव कल्पद्रुम
द्रुमाधिप कृतं त्वया वितरणैकचेतस्तया ।
समं वदति पण्डितैरतिजडस्य संभावना-
मसौ तदधुना मनाग्हसति हन्त तान्पण्डितान् ॥ २ ॥

( लक्ष्मणः )

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ ३ ॥

( कस्यापि )

अथ **चम्पकः**—

साधारणतरुबुध्या न मया बद्धस्तवालवालोऽपि ।
लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥ ४ ॥

भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ५ ॥

कोपं चम्पक मुञ्च याचकजनैरायासितस्त्वं सखे
मा म्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् ।
कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तदा कुप्यतां
येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥ ६ ॥

अथ **केसरतरुः**—

[संभावितो न] तरुणीकरपल्लवेन
सिक्तोसि नेन्दुवदनावदनासवेन ।
कुग्रामपामरनिकेतनसंनिधाने
केनेह केसरतरो बत रोपितोऽसि ॥ ७ ॥

अथागुरुः—

एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी
संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः ।
धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदय-
न्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥ ८ ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु ।
अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ९ ॥

( केषामप्येते )

अथाम्रः—

रे रे रसाल तरुसार वचो वि(ऽव)धेहि
वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम् ।
तावद्विकस्वरपिकद्विजसात्कुरु द्रा-
ङ्न व्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥ १० ॥

यद्यध्वनीन चिरमध्वनि घर्मखिन्नः
कासारतीररुहमाश्रय नम्रमाम्रम् ।
छाया न केवलमितः श्रमिता लभन्ते
कामं पचेलिमफलं विमलं जलं च ॥ ११ ॥

( भोजप्रबन्धात् )

न तादृक्कर्पूरे न च मलयजे नो मृगमदे
फले वा पुष्पे वा तव मिलति यादृक्परिमलः ।
परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः
पिके वा काके वा गुरुलघुविशेषं न मनुषे ॥ १२ ॥

( एते लक्ष्मणस्य )

अथ द्राक्षा—

दासेरकस्य दासीयं बदरी यदि रोचते ।
एतावतैव किं द्राक्षा न साक्षादमृतास्पदम् ॥ १३ ॥

अथागुरुः—

एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी
संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः ।
धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदय-
न्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥ ८ ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु ।
अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ९ ॥
(केषामप्येते)

अथाम्रः—

रे रे रसाल तरुसार वचो वि(ऽव)धेहि
वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम् ।
तावद्विकस्वरपिकद्विजसात्कुरु द्रा-
ङ्न्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥ १० ॥

यद्यध्वनीन चिरमध्वनि घर्मखिन्नः
कासारतीररुहमाश्रय नम्रमाम्रम् ।
छाया न केवलमितः श्रमिता लभन्ते
कामं पचेलिमफलं विमलं जलं च ॥ ११ ॥
(भोजप्रबन्धात्)

न तादृक्कर्पूरे न च मलयजे नो मृगमदे
फले वा पुष्पे वा तव मिलति यादृक्परिमलः ।
परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः
पिके वा काके वा गुरुलघुविशेषं न मनुषे ॥ १२ ॥
(एते लक्ष्मणस्य)

अथ द्राक्षा—

दासेरकस्य दासीयं बदरी यदि रोचते ।
एतावतैव किं द्राक्षा न साक्षादमृतास्पदम् ॥ १३ ॥

यद्यपि न भवति हानिः परकीयां चरति रासभो द्राक्षाम् ।
असमञ्जसमिति मत्त्वा तथापि परिखिद्यते चेतः ॥ १४ ॥ ( कयोरपि )

अथ **पलाशः**—

किंशुके शुक मा तिष्ठ भाविमृष्टफलाशया ।
बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥ १५ ॥ ( कस्यापि )

उपनदपुलिने महापलाशः पवनसमुच्चलदेकपत्रपाणिः ।
दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥ १६ ॥
( भोजप्रबन्धात् )

अथ **तालः**—

त्वमध्वनीनाध्वनि तालशालच्छायामिमां हस्तमितां श्रितोऽसि ।
छायाफलेनाप्यतुलं फलं चे··········दलितं वृथा स्यात् ॥ १७ ॥
( लक्ष्मणस्य )

अथ **वृक्षः**—

कश्चिन्नवं पल्लवमादधाति कश्चित्प्रसूनानि फलानि कश्चित् ।
परं करालेऽस्य निदाघकाले मूले न दाता सलिलस्य कश्चित् ॥ १८ ॥
( लक्ष्मणस्य )

भुक्तानि यैस्तव फलानि पचेलिमानि
क्रोडस्थितैरहह वीतभयैः प्रसुप्तम् ।
ते पक्षिणो जलरयेण विकृष्यमाणं
पश्यन्ति पादप भवन्तममी तटस्थाः ॥ १९ ॥
( महादेवस्य )

किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः ।
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ २० ॥
( कस्यापि )

यद्यपि न भवति हानिः परकीयां चरति रासभो द्राक्षाम्।
असमञ्जसमिति मत्त्वा तथापि परिखिद्यते चेतः॥ १४ ॥ ( कयोरपि )

अथ **पलाशः**—

किंशुके शुक मा तिष्ठ भाविमृष्टफलाशया।
बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः॥ १५ ॥ ( कस्यापि )

उपनदपुलिने महापलाशः पवनसमुच्चलदेकपत्रपाणिः।
दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम्॥ १६ ॥
( भोजप्रबन्धात् )

अथ **तालः**—

त्वमध्वनीनाध्वनि तालशालच्छायामिमां हस्तमितां श्रितोऽसि।
छायाफलेनाप्यतुलं फलं चे·············दलितं वृथा स्यात्॥ १७ ॥
( लक्ष्मणस्य )

अथ **वृक्षः**—

कश्चिन्नवं पल्लवमादधाति कश्चित्प्रसूनानि फलानि कश्चित्।
परं करालेऽस्य निदाघकाले मूले न दाता सलिलस्य कश्चित्॥ १८ ॥
( लक्ष्मणस्य )

भुक्तानि यैस्तव फलानि पचेलिमानि
क्रोडस्थितैरहह वीतभयैः प्रसुप्तम्।
ते पक्षिणो जलरयेण विकृष्यमाणं
पश्यन्ति पादप भवन्तममी तटस्थाः॥ १९ ॥
( महादेवस्य )

किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः।
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः॥ २० ॥
( कस्यापि )

इयं बाला वल्ली मृदुकिसलयं तापविलयं
घनच्छायं शालं नवमतिविशालं परिगता ।
परं त्वस्याभ्यन्तर्गरललवभस्मीकृतवनं
भुजङ्गं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥ २१ ॥
( लक्ष्मणस्य )

अथ **कमलिनी**—

विधौ पुरःस्थे(पि)निधौ कलानामुद्यत्करेऽपि द्विजराजनाम्नि ।
किं पद्मिनी हारकवच्चकार वराटकीनामपि गोपनानि ॥ २२ ॥
रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् ।
त्वं पङ्कजन्मापि यदच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥२३
( द्वौ लक्ष्मणस्य )

अथ **कुमुद्वती**—

अपि त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनि बन्धुभावः ।
जनापवादः परितः प्रयातः समागमो हन्त न जातु जातः ॥ २४
( कस्यापि )

जनिः सरोऽङ्कादतिपङ्किनो यद्यल्लोलुपैर्वा मधुपैर्विहारः ।
कलङ्क एवैष कुमुद्वतीनां कलङ्किनः किंतु कलावतीनाम् ॥ २५ ॥
( लक्ष्मणस्य )

अथ **भृङ्गः**—

अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
बालां कदर्थयसि किं नवमल्लिकायाः ॥ २६ ॥
( विकटनितम्बायाः )

मदनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् ।
वनमुपगम्य भ्रमरः संप्रति जातो जपासक्तः ॥ २७ ॥
( कस्यापि )

इयं बाला वल्ली मृदुकिसलयं तापविलयं
घनच्छायं शालं नवमतिविशालं परिगता ।
परं त्वस्याभ्यन्तर्गरललवभस्मीकृतवनं
भुजङ्गं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥ २१ ॥
( लक्ष्मणस्य )

अथ **कमलिनी**—
विधौ पुरःस्थे(पि)निधौ कलानामुद्यत्करेऽपि द्विजराजनाम्नि ।
किं पद्मिनी हारकवच्चकार वराटकीनामपि गोपनानि ॥ २२ ॥
रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् ।
त्वं पङ्कजन्मापि यदृच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥२३
( द्वौ लक्ष्मणस्य )

अथ **कुमुद्वती**—
अपि त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनि बन्धुभावः ।
जनापवादः परितः प्रयातः समागमो हन्त न जातु जातः ॥ २४
( कस्यापि )

जनिः सरोऽङ्कादतिपङ्किनो यद्यल्लोलुपैर्वा मधुपैर्विहारः ।
कलङ्क एवैष कुमुद्वतीनां कलङ्किनः किंतु कलावतीनाम् ॥ २५ ॥
( लक्ष्मणस्य )

अथ **भृङ्गः**—
अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
बालां कदर्थयसि किं नवमल्लिकायाः ॥ २६ ॥
( विकटनितम्बायाः )

मदनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् ।
वनमुपगम्य भ्रमरः संप्रति जातो जपासक्तः ॥ २७ ॥
( कस्यापि )

कियद्वारं वारस्थितमधुकरैः पद्मसदने
त्वमद्धा रुद्धोऽसि द्रुतमिति निषिद्धोऽस्यपसर।
हठादन्तर्गत्वा पिबसि मकरन्दं च मधुलिट्
मिषन्तस्तिष्ठामो वयमिह दुराशानियमिनः॥ २८॥
आलिङ्गसे(?) चारुलतां लवङ्गीमाचुम्बसे(?) चाम्बुजिनीं क्रमेण।
तां चूतवल्लीं मधुप प्रकामं संताडयस्येव पदैः किमेतत्॥ २९॥
(एतौ लक्ष्मणस्य)

स्वामोदवासितसमग्रदिगन्तराला
रक्ता मनोहरशिखा सुकुमारमूर्तिः।
सेव्या सरोजकलिका तु यदैव जाता
नीतस्तदैव विधिना मधुपोऽन्यदेशम्॥ ३०॥
अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे।
इह नहि मधुलवलाभो भवति परं धूलिधूसरं वदनम्॥ ३१॥
(कस्यापि)

सानन्दमेष मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोषादभूदहह निःसरणं पुमर्थः॥ ३२॥
(रामचन्द्रस्य)

अथ **पिकः**—
किं कोमलैः कलरवैः पिक तिष्ठ तूष्णी-
मेते तु पामरनराः स्वरमाकलय्य।
को वा रटत्ययमये निकटे कटूनि
रे वध्यतामिति वदन्ति गृहीतदण्डाः॥ ३३॥
(लक्ष्मणस्य)

शृगालशशशार्दूलदूषितं दण्डकावनम्।
पञ्चमं गायतानेन कोकिलेन प्रतिष्ठितम्॥ ३४॥ (भानुकरस्य)

कियद्वारं वारस्थितमधुकरैः पद्मसदने
त्वमद्धा रुद्धोऽसि द्रुतमिति निषिद्धोऽस्यपसर ।
हठादन्तर्गत्वा पिबसि मकरन्दं च मधुलिट्
मिषन्तस्तिष्ठामो वयमिह दुराशानियमिनः ॥ २८ ॥

आलिङ्गसे(?) चारुलतां लवङ्गीमाचुम्बसे(?) चाम्बुजिनीं क्रमेण ।
तां चूतवल्लीं मधुप प्रकामं संताडयस्येव पदैः किमेतत् ॥ २९ ॥
(एतौ लक्ष्मणस्य)

स्वामोदवासितसमग्रदिगन्तराला
रक्ता मनोहरशिखा सुकुमारमूर्तिः ।
सेव्या सरोजकलिका तु यदैव जाता
नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥ ३० ॥

अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे ।
इह नहि मधुलवलाभो भवति परं धूलिधूसरं वदनम् ॥ ३१ ॥
(कस्यापि)

सानन्दमेष मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि ।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोषादभूदहह निःसरणं पुमर्थः ॥ ३२ ॥
(रामचन्द्रस्य)

अथ **पिकः**—

किं कोमलैः कलरवैः पिक तिष्ठ तूष्णी-
मेते तु पामरनराः स्वरमाकलय्य ।
को वा रटत्ययमये निकटे कटूनि
रे वध्यतामिति वदन्ति गृहीतदण्डाः ॥ ३३ ॥
(लक्ष्मणस्य)

शृगालशशशार्दूलदूषितं दण्डकावनम् ।
पञ्चमं गायतानेन कोकिलेन प्रतिष्ठितम् ॥ ३४ ॥ (भानुकरस्य)

अथ चातकः—

ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् ।
अत्यूर्जितं गर्जितगात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरम् ॥ ३५ ॥
( लक्ष्मणस्य )

एक एव खगो मानी चिरं जीवतु चातकः ।
म्रियते वा पिपासायां याचते वा पुरंदरम् ॥ ३६ ॥ ( कस्यापि )

अथ शुकः—

सुभाषितस्याध्ययनेऽनुषक्तं शुकं वराकाः प्रहसन्ति काकाः ।
तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपया नतास्याः ॥ ३७ ॥

अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः
स्फुटं नृत्यद्भृङ्गीविविधनवसंगीतकलनात् ।
परानन्दैः पूर्णाः क इव तव वर्णावलिपद-
क्रमश्रोता वेत्ता द्विजवर शुक श्राम्यसि कुतः ॥ ३८ ॥
( द्वौ लक्ष्मणस्य )

इयं पल्ली भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ ३९ ॥
( भर्तृहरेः )

द्राक्षां प्रदेहि मधु वा वदने निधेहि
देहे विधेहि किमु वा करलालनानि ।
जातिस्वभावचपलः पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ ४० ॥ ( कस्यापि )

अथ हंसः—

हा हन्त मानससरःसलिलावतंस
रे राजहंस पयसोः प्रविवेचनाय ।

**अथ चातकः—**

ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् ।
अत्यूर्जितं गर्जितगात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरम् ॥ ३५ ॥
( लक्ष्मणस्य )

एक एव खगो मानी चिरं जीवतु चातकः ।
म्रियते वा पिपासायां याचते वा पुरंदरम् ॥ ३६ ॥ ( कस्यापि )

**अथ शुकः—**

सुभाषितस्याध्ययनेऽनुषक्तं शुकं वराकाः प्रहसन्ति काकाः ।
तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपया नतास्याः ॥ ३७ ॥

अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः
स्फुटं नृत्यद्भृङ्गीविविधनवसंगीतकलनात् ।
परानन्दैः पूर्णाः क इव तव वर्णावलिपद-
क्रमश्रोता वेत्ता द्विजवर शुक भ्राम्यसि कुतः ॥ ३८ ॥
( द्वौ लक्ष्मणस्य )

इयं पल्ली भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥ ३९ ॥
( भर्तृहरेः )

द्राक्षां प्रदेहि मधु वा वदने निधेहि
देहे विधेहि किमु वा करलालनानि ।
जातिस्वभावचपलः पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ ४० ॥ ( कस्यापि )

**अथ हंसः—**

हा हन्त मानससरःसलिलावतंस
रे राजहंस पयसोः प्रविवेचनाय ।

चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्
किं वा कपोत उत वा कलविङ्कपोतः ॥ ४१ ॥
( लक्ष्मणस्य )

हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे
प्रेयान्मे बिसकन्दलीकिसलयं भुङ्क्ते ह्ययं निर्वृतः ।
नो जानाति तपस्विनी यदनिशं जम्बालमालोडय-
ञ्शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥ ४२ ॥
( कस्यापि )

अथ **समुद्रः**—

निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परंतु
पाथोनिधे स्मरणमान्तरमावहेथाः ॥ ४३ ॥

त्वमद्य सिन्धो जगदेकबन्धो रत्नानि दातुं विमुखोऽसि कस्मात् ।
किं वा सुतः कल्पमहीरुहस्ते दानैः कृतार्थीकुरुते जगन्ति ॥ ४४ ॥
( भानुकरस्यैतौ )

पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्रामत्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव ।
गाम्भीर्यं तच्च तादृक् तव सलिलनिधे किंतु विज्ञाप्यमेत-
त्सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काङ्क्षणीयाः ॥ ४५ ॥
( हरिहरस्य )

रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः ।
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥ ४६ ॥

स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकलमेव फलं पयोधे
यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ ४७ ॥ ( कयोरपि )

चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्
किं वा कपोत उत वा कलविङ्कपोतः ॥ ४१ ॥
( लक्ष्मणस्य )

हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे
प्रेयान्मे बिसकन्दलीकिसलयं भुङ्क्ते ह्ययं निर्वृतः ।
नो जानाति तपस्विनी यदनिशं जम्बालमालोडय-
ञ्शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥ ४२ ॥
( कस्यापि )

अथ **समुद्रः**—

निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परंतु
पाथोनिधे स्मरणमान्तरमावहेथाः ॥ ४३ ॥

त्वमद्य सिन्धो जगदेकबन्धो रत्नानि दातुं विमुखोऽसि कस्मात् ।
किं वा सुतः कल्पमहीरुहस्ते दानैः कृतार्थीकुरुते जगन्ति ॥ ४४ ॥
( भानुकरस्यैतौ )

पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्रामत्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव ।
गाम्भीर्यं तच्च तादृक् तव सलिलनिधे किंतु विज्ञाप्यमेत-
त्सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काङ्क्षणीयाः ॥ ४५ ॥
( हरिहरस्य )

रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः ।
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥ ४६ ॥

स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकलमेव फलं पयोधे
यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ ४७ ॥ ( कयोरपि )

अथ **तडागः**—

क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्यतां
मद्गुर्मोद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः ।
भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे
हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ ४८ ॥

( कस्यापि )

भ्रमरैर्गतं मधुकरैश्चलितं प्रकरं(रैः) प्रयातमपि पद्मदृशाम् ।
विभवे गते सकलमेव गतं ध्रुवमेकमञ्चयति यशः सरसीम् ॥ ४९ ॥

( भानुकरस्य )

अथ **गिरिनिर्झरः**—

कल्लोलसंचलदगाधजलैरलोलैः
कल्लोलिनीपरिवृढैः किमपेयतोयैः ।
जीयात्स जर्जरतनुर्गिरिनिर्झरोऽयं
यद्विप्रुषापि तृषिता वितृषा भवन्ति ॥ ५० ॥

यद्वैभवाय निजवारिणि वारिसिन्धोः
क्षारं विमिश्रयसि निर्झर तद्वृथैव ।
धिग्वैभवं तु तदमी तृषितास्तवैव
नीराय हन्त मधुराय करं किरन्ति ॥ ५१ ॥

( द्वौ लक्ष्मणस्य )

अथ **जलम्**—

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किं वातः परमस्ति ते स्तुतिपदं यज्जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ ५२ ॥

( कस्यापि )

---

१. शरारिपक्षी.

अथ तडागः—

क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्यतां
मद्गुर्मोद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः।
भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे
हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव॥ ४८॥

(कस्यापि)

भ्रमरैर्गतं मधुकरैश्चलितं प्रकरं(रैः) प्रयातमपि पद्मदृशाम्।
विभवे गते सकलमेव गतं ध्रुवमेकमञ्चयति यशः सरसीम्॥ ४९॥

(भानुकरस्य)

अथ गिरिनिर्झरः—

कल्लोलसंचलदगाधजलैरलोलैः
कल्लोलिनीपरिवृढैः किमपेयतोयैः।
जीयात्स जर्जरतनुर्गिरिनिर्झरोऽयं
यद्विप्रुषापि तृषिता वितृषा भवन्ति॥ ५०॥
यद्वैभवाय निजवारिणि वारिसिन्धोः
क्षारं विमिश्रयसि निर्झर तद्वृथैव।
धिग्वैभवं तु तदमी तृषितास्तवैव
नीराय हन्त मधुराय करं किरन्ति॥ ५१॥

(द्वौ लक्ष्मणस्य)

अथ जलम्—

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे।
किं वातः परमस्ति ते स्तुतिपदं यज्जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः॥ ५२॥

(कस्यापि)

---

१. शरारिपक्षी.

अथ कूपः—

यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य।
जयति तथापि विवेको दानं पात्रानुमानेन ॥ ५३ ॥

(भोजदेवस्य)

सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः।
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ ५४ ॥

(शार्ङ्गधरस्य)

अथ महीधरः—

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिता हि तरवस्तरवस्त एव।
मन्यामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनानि ॥ ५५ ॥

रोहणाचल शैलेषु कस्तुलां कलयेत्तव।
यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥ ५६ ॥

(कयोरपि)

अथ केसरी—

कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतमयं
निरातङ्को यन्निर्दयहृदयभावोऽर्दयतु तत्।
निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा
हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ५७ ॥

(लक्ष्मणस्य)

अन्तर्बलान्यहममुष्य मृगाधिपस्य
वाचा निवेद्य कथमद्य लघूकरोमि।
जानन्ति किंतु करजक्षतकुम्भिकुम्भ-
निर्मुक्तमौक्तिकमयानि वनान्तराणि ॥ ५८ ॥

(कस्यापि)

अथ कूपः—

यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य।
जयति तथापि विवेको दानं पात्रानुमानेन ॥ ५३ ॥

(भोजदेवस्य)

सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः।
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ ५४ ॥

(शार्ङ्गधरस्य)

अथ महीधरः—

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिता हि तरवस्तरवस्त एव।
मन्यामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनानि ॥ ५५ ॥

रोहणाचल शैलेषु कस्तुलां कलयेत्तव।
यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥ ५६ ॥

(कयोरपि)

अथ केसरी—

कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतमयं
निरातङ्को यन्निर्दयहृदयभावोऽर्दयतु तत्।
निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा
हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ५७ ॥

(लक्ष्मणस्य)

अन्तर्बलान्यहममुष्य मृगाधिपस्य
वाचा निवेद्य कथमद्य लघूकरोमि।
जानन्ति किंतु करजक्षतकुम्भिकुम्भ-
निर्मुक्तमौक्तिकमयानि वनान्तराणि ॥ ५८ ॥

(कस्यापि)

स्तन्यं जातो न जग्राह कण्ठीरवकिशोरकः।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ ५९ ॥

(भानुकरस्य)

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नधीधृतिरपि प्राणेषु गच्छत्स्वपि।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ ६० ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ६१ ॥

(भर्तृहरेः)

अथ **गजः**—

क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहै-
र्वल्ली काचन शल्लकीतरुगता नाकर्षिता हर्षतः।
नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना
दंष्ट्राभिर्विकटाननः शिव शिव व्यालोकि पञ्चाननः ॥ ६२ ॥

(लक्ष्मणस्य)

केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ ६३ ॥

(आनन्दवर्धनस्य)

कौपे पयसि लघीयसि तापेन करः प्रसारितः करिणा।
सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ ६४ ॥
दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ ६५ ॥

(कयोरपि)

स्तन्यं जातो न जग्राह कण्ठीरवकिशोरकः।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ ५९ ॥
(भानुकरस्य)

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नधीधृतिरपि प्राणेषु गच्छत्स्वपि।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ ६० ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ६१ ॥
(भर्तृहरेः)

**अथ गजः—**

क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहै-
र्वेल्ली काचन शल्लकीतरुगता नाकर्षिता हर्षतः।
नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना
दंष्ट्राभिर्विकटाननः शिव शिव व्यालोकि पञ्चाननः ॥ ६२ ॥
(लक्ष्मणस्य)

केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ ६३ ॥
(आनन्दवर्धनस्य)

कौपे पयसि लघीयसि तापेन करः प्रसारितः करिणा।
सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ ६४ ॥

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ ६५ ॥
(कयोरपि)

निषेवन्तामेते वृषमहिषमेषाश्वहरिणा
गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः ।
गजानामास्थानं मदसलिलजम्बालितभुवां
तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥ ६६ ॥
लुलाये गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन्कार्पण्यं किमिह महिमानं गमयसि ।
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिप दशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयतु कः ॥ ६७ ॥
(कयोरपि)

तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ६८ ॥
(लक्ष्मणसेनस्य)

एष एव मनस्तापः पङ्के मग्नस्य दन्तिनः ।
यतते यत्समुद्धर्तुं ज्ञातयो निभृतस्मिताः ॥ ६९ ॥
गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत् ।
पारमुत्प्लुत्य यद्गच्छन्हरिणोऽपि हसत्यसौ ॥ ७० ॥
(भानुकरस्यैतौ)

अथ **मृगः**—

तृणं किं तर्णोषि प्रपिबसि किमर्णोऽपि मधुरं
रतक्रीडासक्तामभिरमयसे किं नु हरिणीम् ।
अये जानासि त्वं न खलु मृगयोः पाशपतितं
ततो मोक्षोपायं तव कमपि संचिन्तय सखे ॥ ७१ ॥
(लक्ष्मणस्य)

अथ **मेघः**—

ते ते चातकपोतका वितृषिता दावाग्निमग्नं वनं
संनिर्वापितमुष्णतापितमही निर्वापिता सर्वतः ।

निषेवन्तामेते वृषमहिषमेषाश्वहरिणा
गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः ।
गजानामास्थानं मदसलिलजम्बालितभुवां
तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥ ६६ ॥
लुलाये गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन्कार्पण्यं किमिह महिमानं गमयसि ।
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिप दशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयतु कः ॥ ६७ ॥
( कयोरपि )

तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ६८ ॥
( लक्ष्मणसेनस्य )

एष एव मनस्तापः पङ्के मग्नस्य दन्तिनः ।
यतते यत्समुद्धर्तुं ज्ञातयो निभृतस्मिताः ॥ ६९ ॥
गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत् ।
पारमुत्प्लुत्य यद्गच्छन्हरिणोऽपि हसत्यसौ ॥ ७० ॥
( भानुकरस्यैतौ )

अथ **मृगः**—

तृणं किं तर्णोषि प्रपिबसि किमर्णोऽपि मधुरं
रतक्रीडासक्तामभिरमयसे किं नु हरिणीम् ।
अये जानासि त्वं न खलु मृगयोः पाशपतितं
ततो मोक्षोपायं तव कमपि संचिन्तय सखे ॥ ७१ ॥
( लक्ष्मणस्य )

अथ **मेघः**—

ते ते चातकपोतका वितृषिता दावाग्निमग्नं वनं
संनिर्वापितमुष्णतापितमही निर्वापिता सर्वतः ।

कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर
त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥ ७२ ॥
नीरं दूरं तदपि विरसं जंगमा नो लताद्या-
स्तस्मिन्दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम् ।
दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैलाः
शालावन्तोऽमृतनिभजलैस्तर्पिताः सर्व एते ॥ ७३ ॥
अकूपाराद्वारि प्रचुरतरमादाय जलदः
स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम् ।
स मेघो धन्यो यत्परिकिरति मुक्ताफलतया
यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे ॥ ७४ ॥
नैवालवालवलयं भरितं द्रुमाणां
नार्द्रीकृतापि बत चातकपोतचञ्चुः ।
दावानलाकुलतरुः शमितो न शीघ्रं
भाराय वारिधर वारिपदं तवाभूत् ॥ ७५ ॥

(लक्ष्मणस्यैते)

आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः ।
पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ७६ ॥

(रङ्गनाथस्य)

भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठितैर्यस्मिन्मुहुर्मूर्च्छितम् ।
तस्मिञ्शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं
यत्राकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ ७७ ॥

(भोजप्रबन्धात्)

शोषं गते सरसि शैवलमञ्जरीणा-
मन्तस्तिमिर्लुठति तापविशीर्णदेहः ।
अत्रान्तरे यदि न वारिद वारिपूरै-
राप्लावयेस्तदनु किं मृतमण्डनेन ॥ ७८ ॥

१. विनष्टभूषणेनेत्यर्थः.

कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर
त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥ ७२ ॥
नीरं दूरं तदपि विरसं जंगमा नो लताद्या-
स्तस्मिन्दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम् ।
दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैलाः
शालावन्तोऽमृतनिभजलैस्तर्पिताः सर्व एते ॥ ७३ ॥
अकूपाराद्वारि प्रचुरतरमादाय जलदः
स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम् ।
स मेघो धन्यो यत्परिकिरति मुक्ताफलतया
यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे ॥ ७४ ॥
नैवालवालवलयं भरितं द्रुमाणां
नार्द्रीकृतापि बत चातकपोतचञ्चुः ।
दावानलाकुलतरुः शमितो न शीघ्रं
भाराय वारिधर वारिपदं तवाभूत् ॥ ७५ ॥
(लक्ष्मणस्यैते)

आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः ।
पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ७६ ॥
(रङ्गनाथस्य)

भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठितैर्यस्मिन्मुहुर्मूर्च्छितम् ।
तस्मिञ्शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं
यत्राकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ ७७ ॥
(भोजप्रबन्धात्)

शोषं गते सरसि शैवलमञ्जरीणा-
मन्तस्तिमिर्लुठति तापविशीर्णदेहः ।
अत्रान्तरे यदि न वारिद वारिपूरै-
राप्लावयेस्तदनु किं मृतमण्डनेन ॥ ७८ ॥

१. विनष्टभूषणेनेत्यर्थः,

प्रावृषेण्यस्य मालिन्यं दोषः कोऽभीष्टवर्षिणः ।
शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ ७९ ॥
त्वमेव चातकाधार इति केषां न गोचरः ।
धिगम्भोधर तस्यापि कार्पण्योक्तिं प्रतीक्षसे ॥ ८० ॥

(केषामप्येते)

अथ वायुः—

वृथा धूलीधाराः परिकिरसि वात्याः प्रथयसे
नवावेगः कोऽयं पवन तव हा नन्वसमये ।
रतान्तश्रान्ताभिः स्तिमितनयनान्ताभिरनिशं
स्मृतो यत्कान्ताभिर्न सुलभतरः क्वापि च भवान् ॥ ८१ ॥
स्वतो ददाति नो नीरं नीरदानोन्मुखं घनम् ।
यत्तु वारयसे तन्न मातरिश्वन् तवोचितम् ॥ ८२ ॥

( लक्ष्मणस्य )

अथ चन्द्रान्यापदेशः—

कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपति-
र्द्युतिस्तादृग्नूला जनिरपि च रत्नाकरकुले ।
बहु ब्रूमः किंवा पुरहरशिरोमण्डनमसि[1]
त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ८३ ॥

( लक्ष्मणस्य )

व्यज्यमानकलङ्कस्य वृद्धौ सैति कलानिधेः ।
आशास्महे वयं पूर्वां सर्वश्लाघ्यां कृशां दशाम् ॥ ८४ ॥
क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद्यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥ ८५ ॥

( कयोरपि )

नीराणि नक्रवडवानलदूषितानि
तीराणि दुस्तरतरङ्गदुरुत्तराणि ।

१. 'त्रिभुवनसरोमण्डनमसि' इति ख. पु. २. सत्यामिति भवेत्.

प्रावृषेण्यस्य मालिन्यं दोषः कोऽभीष्टवर्षिणः ।
शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ ७९ ॥
त्वमेव चातकाधार इति केषां न गोचरः ।
धिगम्भोधर तस्यापि कार्पण्योक्तिं प्रतीक्षसे ॥ ८० ॥
(केषामप्येते)

अथ वायुः—

वृथा धूलीधाराः परिकिरसि वात्याः प्रथयसे
नवावेगः कोऽयं पवन तव हा नन्वसमये ।
रतान्तश्रान्ताभिः स्तिमितनयनान्ताभिरनिशं
स्मृतो यत्कान्ताभिर्न सुलभतरः क्वापि च भवान् ॥ ८१ ॥
स्वतो ददाति नो नीरं नीरदानोन्मुखं घनम् ।
यत्तु वारयसे तन्न मातरिश्वन् तवोचितम् ॥ ८२ ॥
(लक्ष्मणस्य)

अथ चन्द्रान्यापदेशः—

कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्विजपति-
र्द्युतिस्तादृग्नूला जनिरपि च रत्नाकरकुले ।
बहु ब्रूमः किंवा पुरहरशिरोमण्डनमसि[1]
त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ८३ ॥
(लक्ष्मणस्य)

व्यज्यमानकलङ्कस्य वृद्धौ सति कलानिधेः ।
आशास्महे वयं पूर्वां सर्वश्लाघ्यां कृशां दशाम् ॥ ८४ ॥
क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद्यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥ ८५ ॥
(कयोरपि)

नीराणि नक्रवडवानलदूषितानि
तीराणि दुस्तरतरङ्गदुरुत्तराणि ।

१. 'त्रिभुवनसरोमण्डनमसि' इति ख. पु. २. सत्यामिति भवेत्.

श्राव्यं किमस्य जलधेर्यदि नैष सूनु-
राशाप्रसाधनकरो रजनीकरः स्यात् ॥ ८६ ॥
(भानुकरस्य)

अथ **रवेरन्यापदेशः**—

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ ८७ ॥

दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य क्षीयतेऽन्यस्य का कथा ॥ ८८ ॥

करं प्रसार्य रविणा दक्षिणाशावलम्बिना ।
न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ ८९ ॥
(केषामपि)

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन् भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि ।
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं
घूकैरुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥ ९० ॥
(परिमलस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचनायां** चतुर्दशो व्यापारः ।

---

पञ्चदशो व्यापारः ।

अथ **कौतुकात्किंचित्समस्याख्यानम्**—

सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने ।
तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥ १ ॥
(देवेश्वरस्य)

तवानने मानिनि मञ्जुलस्य यदञ्जनस्यैष लवो निमग्नः ।
इतीव लोकः प्रकरोति तर्कं पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ २ ॥
(लक्ष्मणस्य)

आव्यं किमस्य जलधेर्यदि नैष सूनु-
राशाप्रसाधनकरो रजनीकरः स्यात् ॥ ८६ ॥
(भानुकरस्य)

अथ **रवेरन्यापदेशः**—

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ ८७ ॥

दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य क्षीयतेऽन्यस्य का कथा ॥ ८८ ॥

करं प्रसार्य रविणा दक्षिणाशावलम्बिना ।
न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ ८९ ॥
(केषामपि)

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन् भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि ।
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं
घूकैरुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥ ९० ॥
(परिमलस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**कृतौ **पद्यरचनायां** चतुर्दशो व्यापारः ।

---

पञ्चदशो व्यापारः ।

अथ **कौतुकात्किंचित्समस्याख्यानम्**—

सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने ।
तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥ १ ॥
(देवेश्वरस्य)

तवानने मानिनि मञ्जुलस्य यदञ्जनस्यैष लवो निमग्नः ।
इतीव लोकः प्रकरोति तर्कं पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ २ ॥
(लक्ष्मणस्य)

चमूभरन्यञ्चदुदञ्चदुर्वीतले प्रयाणे तव भूमिपाल ।
अभून्नृपाणां विगलत्रपाणां कण्ठे कुठारः कमठे ठकारः ॥ ३ ॥
प्रविशति हरिताभः पङ्कजातैर्निमग्न-
द्रुहिणचरणसेवां कर्तुमिद्रेशलेपैः (।?)
अगणितपरिमाणे भृङ्गभङ्गीं दधाने
भ्रमति कमलकोषे मत्तमातङ्गसङ्घः ॥ ४ ॥
तर्तुं पर्वतसंनिभेन कपिनालाबू कृतां वक्षसि
क्षिप्रं वीक्ष्य निमज्जतीमथ नलस्पृष्टास्तरन्तीः शिलाः ।
लोको नृत्यपरं विभीषणजनं चेत्याह सेतूद्यमे
तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति ॥ ५ ॥
कर्णेन निर्जितोऽस्मीति चिन्तां चिन्तामणे त्यज ।
जिता देवद्रुमाः पञ्च न दुःखं पञ्चभिः सह ॥ ६ ॥
यदि प्राप्नोमि तां तन्वीं नो वर्षमपि कामये ।
को विहाय सुधाधारां दशमूलीपयः पिबेत् ॥ ७ ॥
स्निग्धालिवृद्धसौहार्दं सरसामोदमन्दिरम् ।
इयं गणयती भाति पुष्पमालेव कामिनी ॥ ८ ॥
युद्धक्रुद्धभटच्छिन्नकुम्भिकुम्भस्थलोद्गतैः ।
मुक्ताफलशतैः शङ्के दिवा तारकितं नभः ॥ ९ ॥
धन्योऽसौ पोत्रिणीपुत्रो यस्यासौ प्रलयापदि ।
सगोत्रस्य स्थितो दंष्ट्राकण्टकाग्रे महोदधिः ॥ १० ॥
सुमेरुशिखरप्रान्तस्थितदिव्यवधूमुखैः ।
परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम् ॥ ११ ॥
दामोदरकराघातैर्विह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १२ ॥
विधे पिधेहि शीतांशुं यावदायाति मे पतिः ।
आयाते दयिते कुर्याः शतचन्द्रं नभस्तलम् ॥ १३ ॥

चमूभरन्यञ्चदुदञ्चदुर्वीतले प्रयाणे तव भूमिपाल ।
अभून्नृपाणां विगलत्त्रपाणां कण्ठे कुठारः कमठे ठकारः ॥ ३ ॥
प्रविशति हरिताभः पङ्कजातैर्निमग्न-
द्रुहिणचरणसेवां कर्तुमिद्रेशलेपैः (।?)
अगणितपरिमाणे भृङ्गभङ्गीं दधाने
भ्रमति कमलकोषे मत्तमातङ्गसङ्घः ॥ ४ ॥
तत्तुं पर्वतसंनिभेन कपिनालाबूं कृतां वक्षसि
क्षिप्रं वीक्ष्य निमज्जतीमथ नलस्पृष्टास्तरन्तीः शिलाः ।
लोको नृत्यपरं विभीषणजनं चेत्याह सेतूद्यमे
तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति ॥ ५ ॥
कर्णेन निर्जितोऽस्मीति चिन्तां चिन्तामणे त्यज ।
जिता देवद्रुमाः पञ्च न दुःखं पञ्चभिः सह ॥ ६ ॥
यदि प्राप्नोमि तां तन्वीं नो वर्षमपि कामये ।
को विहाय सुधाधारां दशमूलीपयः पिबेत् ॥ ७ ॥
स्निग्धालिवृद्धसौहार्दं सरसामोदमन्दिरम् ।
इयं गणयती भाति पुष्पमालेव कामिनी ॥ ८ ॥
युद्धक्रुद्धभटच्छिन्नकुम्भिकुम्भस्थलोद्गतैः ।
मुक्ताफलशतैः शङ्के दिवा तारकितं नभः ॥ ९ ॥
धन्योऽसौ पोत्रिणीपुत्रो यस्यासौ प्रलयापदि ।
सगोत्रस्य स्थितो दंष्ट्राकण्टकाग्रे महोदधिः ॥ १० ॥
सुमेरुशिखरप्रान्तस्थितदिव्यवधूमुखैः ।
परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम् ॥ ११ ॥
दामोदरकराघातैर्विह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १२ ॥
विधे पिधेहि शीतांशुं यावदायाति मे पतिः ।
आयाते दयिते कुर्याः शतचन्द्रं नभस्तलम् ॥ १३ ॥

चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्ति धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
प्रारब्धे तव चित्रकर्मणि पुनस्तद्वाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते ॥ १४ ॥

त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीयैः
संदर्भितुं विबुधवामदृशः प्रवृत्ताः ।
नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो
हारो न जात इति ताश्च मिथो हसन्ति ॥ १५ ॥

(केषांचित्)

हीनहत्या दधात्येव लाघवं महतामपि ।
इति मत्वा द्विपद्वेषी मृगारिसिंहः पलायते ॥ १६ ॥

(कस्यचित्)

मन्दानिलाहतविलोलशिखप्रदीप-
कक्षान्तरे विनिहितं सभयं तरुण्याः ।
तस्याः समस्तकुचकुम्भयुगं निरीक्ष्य
बाहुं विनेव विदधाति शिरःप्रकम्पम् ॥ १७ ॥

(भानुकरस्य)

यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुण्ठतामागताः ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते सांप्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १८ ॥

(कस्यापि)

अत्रैव **प्रश्नोत्तरेण यथा**—

कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात्कातरो युद्धे मृगारिसिंहः पलायते (नम्) ॥ १९ ॥

चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
प्रारब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते ॥ १४ ॥

त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीयैः
संदर्भितुं विबुधवामदृशः प्रवृत्ताः ।
नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो
हारो न जात इति ताश्च मिथो हसन्ति ॥ १५ ॥

( केषांचित् )

हीनहत्या दधात्येव लाघवं महतामपि ।
इति मत्वा द्विपद्वेषी मृगारिसिंहः पलायते ॥ १६ ॥

( कस्यचित् )

मन्दानिलाहतविलोलशिखप्रदीप-
कक्षान्तरे विनिहितं सभयं तरुण्याः ।
तस्याः समस्तकुचकुम्भयुगं निरीक्ष्य
बाहुं विनेव विदधाति शिरःप्रकम्पम् ॥ १७ ॥

( भानुकरस्य )

यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुण्ठतामागताः ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते सांप्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १८ ॥

( कस्यापि )

अत्रैव **प्रश्नोत्तरेण यथा**—

कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात्कातरो युद्धे मृगारिसिंहः पलायते ( नम् ) ॥ १९ ॥

अत्रैव **पदभङ्गेन यथा**—

मृगात् मृगमत्तीति मृगात् इति सिंहविशेषणम् । पलाय मांसाय ते तवेति ।

अयं मृगः समायाति मृगात्सिंहः पलायते ।
ततो वेगात्पलायस्व त्वदि(मि)तस्त्वरितैः पदैः ॥ २० ॥

अथाद्य **त्रिचरणसमस्यायाः पूरणमन्त्यचरणेन यथा**—

त्रियामा शतयामा स्याच्छतचन्द्रं नभस्तलम् ।
शतेषुरेव पञ्चेषुर्भवेद्यूनां वियोगिनाम् ॥ २१ ॥

मद्गोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः ।
बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दुर्लब्धो लुब्धैः साधुनीचोपकारे ॥२२॥

अथ **द्वितीयपादतुरीयपादसमस्यायाः पूरणं यथा**—

अहल्याकेलिकालेऽभूत्कंदर्पाणां शतद्वयम् ।
तत्पञ्चबाणभिन्नाक्षः सहस्राक्षोऽन्धतां गतः ॥ २३ ॥

अथाद्य **द्वितीयवैदिकपादसमस्यायाः पूरणं यथा**—

कामं कामदुघं धुङ्क्ष्व मित्राय वरुणाय च ।
वयं धीरेण दानेन सर्वान् कामानशीमहि ॥ २४ ॥

अथाद्य **तृतीयवैदिकपादसमस्यायाः पूरणं यथा**—

अणोरणीयान्महतो महीयान्योगे वियोगे दिवसोऽङ्गनायाः ।
यज्ञोपवीतं परमं पवित्रं स्पृष्ट्वा सखे सत्यमिदं ब्रवीमि ॥ २५ ॥
अणोरणीयान्महतो महीयान्मध्यो नितम्बश्च मम प्रियायाः ।
यज्ञोपवीतं परमं पवित्रं किंचाङ्गरागारुणितं प्रियायाः ॥ २६ ॥

(देवेश्वरस्यैते)

अथ **बहिर्लापिकाः**—

का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी
कां रक्षत्यरिहा शरद्विकचयेत्कं धैर्यहन्त्री च का ।
कं धत्ते गणनायकः करतले का चञ्चला कथ्यता-
मारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम् ॥ २७ ॥

अत्रैव **पदभङ्गेन यथा**—

मृगात् मृगमत्तीति मृगात् इति सिंहविशेषणम्। पलाय मांसाय ते तवेति।

अयं मृगः समायाति मृगात्सिंहः पलायते।
ततो वेगात्पलायस्व त्वदि(मि)तस्त्वरितैः पदैः॥ २०॥

अथाद्य **त्रिचरणसमस्यायाः पूरणमन्त्यचरणेन यथा**—

त्रियामा शतयामा स्याच्छतचन्द्रं नभस्तलम्।
शतेषुरेव पञ्चेषुर्भवेद्यूनां वियोगिनाम्॥ २१॥

मद्गोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः।
बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दुर्लब्धो लुब्धैः साधुनीचोपकारे॥२२॥

अथ **द्वितीयपादतुरीयपादसमस्यायाः पूरणं यथा**—

अहल्याकेलिकालेऽभूत्कंदर्पाणां शतद्वयम्।
तत्पञ्चबाणभिन्नाक्षः सहस्राक्षोऽन्धतां गतः॥ २३॥

अथाद्य **द्वितीयवैदिकपादसमस्यायाः पूरणं यथा**—

कामं कामदुघं धुङ्क्ष्व मित्राय वरुणाय च।
वयं धीरेण दानेन सर्वान् कामानशीमहि॥ २४॥

अथाद्य **तृतीयवैदिकपादसमस्यायाः पूरणं यथा**—

अणोरणीयान्महतो महीयान्योगे वियोगे दिवसोऽङ्गनायाः।
यज्ञोपवीतं परमं पवित्रं स्पृष्ट्वा सखे सत्यमिदं ब्रवीमि॥ २५॥
अणोरणीयान्महतो महीयान्मध्यो नितम्बश्च मम प्रियायाः।
यज्ञोपवीतं परमं पवित्रं किंचाङ्गरागारुणितं प्रियायाः॥ २६॥
(देवेश्वरस्यैते)

अथ **बहिर्लापिकाः**—

का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी
कां रक्षत्यरिहा शरद्विकचयेत्कं धैर्यहन्त्री च का।
कं धत्ते गणनायकः करतले का चञ्चला कथ्यता-
मारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम्॥ २७॥

अत्र धारा, राधा, वन्द्या, द्यावम्, काशम्, शङ्का, पाशम्, शम्पा ॥ इत्यारोहादवरोहणेन व्याख्यानम्।

अथ **चित्रकाव्यम्**—

लोकानां मानपात्रं मनुजजनरतिस्त्वंसमूढ्याङ्घ्रिरक्षो
राज्ञामासत्त्वदक्षः कृतसमयरुचिर्मण्डितो वीरवर्गैः।
कायत्वद्धीनकेतुः करमलितयवां(?)कोषमानैर्विहीनः
श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मं दं प्रतीमः॥ २८ ॥

अत्र शत्रुपक्षे मकारस्थाने दकारः पठनीयः।

वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः
संग्रामप्राप्तधैर्यो न विदलितरुचा राजलक्ष्म्यातिहीनः।
नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती
श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः॥ २९ ॥

अत्र पद्ये शत्रुपक्षे आद्याक्षरत्यागः।

(एतौ लक्ष्मणस्य)

इत्यादिचित्रकाव्यं ग्रन्थगौरवभयादुपेक्ष्यते।

अथ **सज्जनः**—

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम्।
सदा लोकहिते रक्ता रत्नदीपा इवोत्तमाः॥ ३० ॥

अथो**दारः**—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥ ३१ ॥
अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत्।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते॥ ३२ ॥ (दण्डिनः)

अथ **प्रशंसा**—

स्वयं स्वगुणविस्तारादूर्णनाभः पतत्यधः।
तमेव संहरन्भूयः पदमुच्चैर्विगाहते॥ ३२ ॥

अत्र धारा, राधा, वन्द्या, द्यावम्, काशम्, शङ्का, पाशम्, शम्पा ॥ इत्यारोहादवरोहणेन व्याख्यानम् ।

अथ **चित्रकाव्यम्**—

लोकानां मानपात्रं मनुजजनरतिस्त्वंसमूढ्याङ्घ्रिरक्षो
राज्ञामासत्त्वदक्षः कृतसमयरुचिर्मण्डितो वीरवर्गैः ।
कायत्वञ्मीनकेतुः करमलितयवां(?)कोषमानैर्विहीनः
श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मं दं प्रतीमः ॥ २८ ॥

अत्र शत्रुपक्षे मकारस्थाने दकारः पठनीयः ।

वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः
संग्रामप्राप्तधैर्यो न विदलितरुचा राजलक्ष्म्यातिहीनः ।
नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती
श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ २९ ॥

अत्र पद्ये शत्रुपक्षे आद्याक्षरत्यागः ।

( एतौ लक्ष्मणस्य )

इत्यादिचित्रकाव्यं ग्रन्थगौरवभयादुपेक्ष्यते ।

अथ **सज्जनः**—

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते रक्ता रत्नदीपा इवोत्तमाः ॥ ३० ॥

अथो**दारः**—

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ३१ ॥

अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ३२ ॥ ( दण्डिनः )

अथ **प्रशंसा**—

स्वयं स्वगुणविस्तारादूर्णनाभः पतत्यधः ।
तमेव संहरन्भूयः पदमुच्चैर्विगाहते ॥ ३२ ॥

गुणप्रशंसा—

गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः ।
प्रासादशिखरारूढः काकः किं गरुडायते ॥ ३४ ॥

अथ **संसर्गप्रशंसा**—

किं वापरेण बहुना परिजल्पितेन
संसर्ग एव महतां महते फलाय ।
अम्भोनिधेस्तटरुहास्तरवोऽपि येन
वेलाजलोच्छलितरत्नकृतालवालाः ॥ ३५ ॥

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ ३६ ॥

वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियाः ।
पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरी यथा ॥ ३७ ॥

( केषामपि )

संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३८ ॥

( भर्तृहरेः )

वारिहारिघटीदोषात्ताड्यते तत्र झल्लरी ।
सच्छिद्रपुरुषस्याग्रे न स्थातव्यं कदाचन ॥ ३९ ॥

अथ धनस्तुतिः—

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता-
च्छीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।

गुणप्रशंसा—

गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः।
प्रासादशिखरारूढः काकः किं गरुडायते ॥ ३४ ॥

अथ **संसर्गप्रशंसा**—

किं वापरेण बहुना परिजल्पितेन
संसर्ग एव महतां महते फलाय।
अम्भोनिधेस्तटरुहास्तरवोऽपि येन
वेलाजलोच्छलितरत्नकृतालवालाः ॥ ३५ ॥

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह।
पयोऽपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ ३६ ॥

वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियाः।
पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरी यथा ॥ ३७ ॥

(केषामपि)

संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।
स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३८ ॥

(भर्तृहरेः)

वारिहारिघटीदोषात्ताड्यते तत्र झल्लरी।
सच्छिद्रपुरुषस्याग्रे न स्थातव्यं कदाचन ॥ ३९ ॥

अथ धनस्तुतिः—

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता-
च्छीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः।

स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४१ ॥

(एतौ भर्तृहरेः)

धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ४२ ॥

(वासिष्ठात्)

भक्ते द्वेषो जडे प्रीतिररुचिर्गुरुलङ्घनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥ ४३ ॥

आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि ।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ४४ ॥

लक्ष्मीर्यादोनिधेर्यादो नादो वादोचितं वचः ।
बिभ्यती धीवरेभ्यो या जडेष्वेव निमज्जति ॥ ४५ ॥

लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्त-
मन्धीभवन्ति पुरुषास्तव सेवनेन ।
नो चेत्कथं कमलपत्रविशालनेत्रो
नारायणः स्वपिति पन्नगभोगतल्पे ॥ ४६ ॥

अथ **कृपणः** —

यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते ।
विभज्यते तदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ ४७ ॥

(केषामपि)

यत्करोत्यरतिक्लेशं तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्याणां हृदये व्याधिरेव सः ॥ ४८ ॥

मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा ।
दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४९ ॥

सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे ।
अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ ५० ॥

(भानुकरस्य)

स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४१ ॥

( एतौ भर्तृहरेः )

धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ४२ ॥

( वासिष्ठात् )

भक्ते द्वेषो जडे प्रीतिररुचिर्गुरुलङ्घनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥ ४३ ॥

आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि ।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ४४ ॥

लक्ष्मीर्यादोनिधेर्यादो नादो वादोचितं वचः ।
बिभ्यती धीवरेभ्यो या जडेष्वेव निमज्जति ॥ ४५ ॥

लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्त-
मन्धीभवन्ति पुरुषास्तव सेवनेन ।
नो चेत्कथं कमलपत्रविशालनेत्रो
नारायणः स्वपिति पन्नगभोगतल्पे ॥ ४६ ॥

अथ **कृपणः** —

यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते ।
विभज्यते तदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ ४७ ॥

( केषामपि )

यत्करोत्यरतिक्लेशं तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्याणां हृदये व्याधिरेव सः ॥ ४८ ॥

मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा ।
दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४९ ॥

सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे ।
अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ ५० ॥

( भानुकरस्य )

स प्राप्तानपि भोगान्न भोक्तुमीष्टे मितंपचः ।
रसालकाले बलिभुङ्मुखरोगाकुलो यथा ॥ ५१ ॥
(लक्ष्मणस्य)

अथार्थी—

जनस्थाने भ्रान्तं कनकमृगतृष्णाकुलतया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ ५२ ॥
(कस्यापि)

अथ **दरिद्रः**—

परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ५३ ॥
हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ५४ ॥
(कयोरपि)

कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलाशोच्चयः ।
दम्पत्योर्निशि जल्पतोरिति वचः श्रुत्वैव चौरस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ५५ ॥
(भोजप्रबन्धात्)

उत्थाय हृदि लीयन्ते निर्धनानां मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ ५६ ॥
(कस्यापि)

अथ **खलः**—

वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव
क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव ।

स प्राप्तानपि भोगान्न भोक्तुमीष्टे मितंपचः ।
रसालकाले बलिभुङ्मुखरोगाकुलो यथा ॥ ५१ ॥

(लक्ष्मणस्य)

अथार्थी—

जनस्थाने भ्रान्तं कनकमृगतृष्णाकुलतया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ ५२ ॥

(कस्यापि)

अथ दरिद्रः—

परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ५३ ॥
हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ५४ ॥

(कयोरपि)

कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलाशोच्चयः ।
दम्पत्योर्निशि जल्पतोरिति वचः श्रुत्वैव चौरस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ५५ ॥

(भोजप्रबन्धात्)

उत्थाय हृदि लीयन्ते निर्धनानां मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ ५६ ॥

(कस्यापि)

अथ खलः—

वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव
क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव ।

मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव
स्वैरन्यैश्च सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः ॥ ५७ ॥
(लक्ष्मणस्य)

हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ५८ ॥
(सुबन्धोः)

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥ ५९ ॥
नौश्च दुर्जनजिह्वा च प्रतिकूलप्रसारिणी ।
परप्रतारणायैव दारुणा केन निर्मिता ॥ ६० ॥
(कस्यापि)

अथ **कुपुत्रः**—

पित्रोर्नैव वचः श्रृणोति दिवसत्यागे व्रजत्यालयं
यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति ।
बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः
साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः ॥ ६१ ॥

अथ **कापुरुषः**—

नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते
नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति ।
किंचित्कापि न साहसं वितनुते गेहे चिरं दूयते
नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ ६२ ॥
कापूरुषः कुक्कुरश्च भोजनैकपरायणः ।
लालितः पार्श्वमायाति वारितो नैव गच्छति ॥ ६३ ॥
प्रागल्भ्यं प्रथयन्यशो विशदयन्धाटीं मुखे योजय-
न्भूपानां कलयन्कथां विरचयन्हस्ताङ्गुलीः स्फोटयन् ।
दानं पल्लवयन्गुणं द्विगुणयन्नेत्राञ्चलं घूर्णयं-
लम्पाकः सविधं समेत्य सुदृशां किं नाम नो भाषते ॥ ६४ ॥

मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव
स्वैरन्यैश्च सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः॥ ५७॥
(लक्ष्मणस्य)

हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम्।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम्॥ ५८॥
(सुबन्धोः)

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम्॥ ५९॥
नौश्च दुर्जनजिह्वा च प्रतिकूलप्रसारिणी।
परप्रतारणायैव दारुणा केन निर्मिता॥ ६०॥
(कस्यापि)

अथ **कुपुत्रः**—

पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं
यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति।
बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः
साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः॥ ६१॥

अथ **कापुरुषः**—

नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते
नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति।
किंचित्क्वापि न साहसं वितनुते गेहे चिरं दूयते
नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम्॥ ६२॥
कापूरुषः कुक्कुरश्च भोजनैकपरायणः।
लालितः पार्श्वमायाति वारितो नैव गच्छति॥ ६३॥
प्रागल्भ्यं प्रथयन्यशो विशदयन्धाटीं मुखे योजय-
न्भूपानां कलयन्कथां विरचयन्हस्ताङ्गुलीः स्फोटयन्।
दानं पल्लवयन्गुणं द्विगुणयन्नेत्राञ्चलं घूर्णयं-
ल्लम्पाकः सविधं समेत्य सुदृशां किं नाम नो भाषते॥ ६४॥

अथ कर्कशः—

समेत्य बहिरङ्गणात्कलहवाक्यमाबिभ्रती
रजः किरति हुंकरोत्यवनमङ्घ्रिणास्कन्दति ।
रदैः कटकटध्वनिं वहति मोटयत्यङ्गुली-
र्वपुर्दशति फूत्कृतिं कलयति क्रुधा धावति ॥ ६५ ॥

( भानुकरस्यैते )

व्यासादीन्कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हस-
न्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ ।
काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ६६ ॥

( कस्यापि )

अथ पण्डितः—

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ।
मदमिलितमिलिन्दश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ ६७ ॥

इह तुरगशतैः प्रयान्तु मूढा धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न समत्वमेति हंसैः ॥ ६८ ॥

( भर्तृहरेरेतौ )

अथ मुनिः—

वल्मीकाग्रनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलतावितानवलयेनात्यर्थसंपीडितः ।
अंशव्यापिशकुन्तनीडनिचयं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ६९ ॥

( कालिदासस्य )

अथ तपोवनम्—

तपोवने केसरिणीकरिण्योरिहाद्भुतं शावकयोर्व्यलोकि ।

अथ कर्कशः—

समेत्य बहिरङ्गणात्कलहवाक्यमाबिभ्रती
रजः किरति हुंकरोत्यवनमङ्घ्रिणास्कन्दति ।
रदैः कटकटध्वनिं वहति मोटयत्यङ्गुली-
र्वपुर्दशति फूत्कृतिं कलयति क्रुधा धावति ॥ ६५ ॥

( भानुकरस्यैते )

व्यासादीन्कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हस-
न्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ ।
काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ६६ ॥

( कस्यापि )

अथ पण्डितः—

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ।
मदमिलितमिलिन्दश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ ६७ ॥

इह तुरगशतैः प्रयान्तु मूढा धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न समत्वमेति हंसैः ॥ ६८ ॥

( भर्तृहरेरेतौ )

अथ मुनिः—

वल्मीकाग्रनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलतावितानवलयेनात्यर्थसंपीडितः ।
अंशव्यापिशकुन्तनीडनिचयं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ६९ ॥

( कालिदासस्य )

अथ तपोवनम्—

तपोवने केसरिणीकरिण्योरिहाद्भुतं शावकयोर्व्यलोकि ।

व्यातेनतुर्यैस्तनपानकाले मात्रोर्विपर्यासविलाससमेतौ ॥ ७० ॥

( लक्ष्मणस्य )

विलोक्य कमलाकान्तमबलास्तनलालसम् ।
जहसुः कुसुमव्याजादिव यत्र महीरुहः ॥ ७१ ॥

मृगसहितं मृगलाञ्छनमाक्रामन्तं विधुंतुदं वीक्ष्य ।
यत्र भयेन भजन्ते मृगशिशवो मृगदृशामङ्के ॥ ७२ ॥

( भानुकरस्यैतौ )

श्यामाकतन्दुलविलेपकदर्थिताभि-
रेताभि····शरणेषु सधर्मिणीभिः ।
तत्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ ७३ ॥

( मुरारेः )

अथ **महावनम्** ।

इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहद्गर्भिणीभ्रूणहत्याः ।
कुहरविरहमाणप्रौढभल्लूकहिक्का-
चयचकितकिरातन्यस्तशस्त्रा वनान्ताः ॥ ७४ ॥

( मुरारेः )

अथ **मृगया**—

अरण्यहरिणग्राममाचक्राम हुताशनः ।
इन्दोः क्रोडमृगं धर्तुमिव धूमो नभो ययौ ॥ ७५ ॥

उपगूहति दवदहने त्रिभुवनधन्यामरण्यानीम् ।
मूर्ता इवान्धकारा प्रतिदिशमपयान्ति कासरावलयः ॥ ७६ ॥

( गणपतेः )

अथ व्यस्यन् व्याघ्रान्··········

································

व्यातेनतुर्यत्स्तनपानकाले मात्रोर्विपर्यासविलासमेतौ ॥ ७० ॥

( लक्ष्मणस्य )

विलोक्य कमलाकान्तमबलास्तनलालसम् ।
जहसुः कुसुमव्याजादिव यत्र महीरुहः ॥ ७१ ॥

मृगसहितं मृगलाञ्छनमाक्रामन्तं विधुंतुदं वीक्ष्य ।
यत्र भयेन भजन्ते मृगशिशवो मृगदृशामङ्के ॥ ७२ ॥

( भानुकरस्यैतौ )

श्यामाकतन्दुलविलेपकदर्थिताभि-
रेताभि····शरणेषु सधर्मिणीभिः ।
तत्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ ७३ ॥

( मुरारेः )

अथ **महावनम्** ।

इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहद्गर्भिणीभ्रूणहत्याः ।
कुहरविरहमाणप्रौढभल्लूकहिक्का-
चयचकितकिरातन्यस्तशस्त्रा वनान्ताः ॥ ७४ ॥

( मुरारेः )

अथ **मृगया**—

अरण्यहरिणग्राममाचक्राम हुताशनः ।
इन्दोः क्रोडमृगं धर्तुमिव धूमो नभो ययौ ॥ ७५ ॥

उपगूहति दवदहने त्रिभुवनधन्यामरण्यानीम् ।
मूर्ता इवान्धकारा प्रतिदिशमपयान्ति कासरावलयः ॥ ७६ ॥

( गणपतेः )

अथ व्यस्यन् व्याघ्रान्·············

·····································

............परिमृगयमाणो मृगकुलं
मृगेन्द्रान्भिन्दानो नृपतिरपि तेने स मृगयाम् ॥ ७७ ॥

निहत निहत तूणे धत्त धत्त त्वराभि-
र्मिलत मिलत के के कुत्र कुत्र प्रयान्ति ।
इत इत इत एते यान्ति यान्तीत्यरण्या-
दतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥ ७८ ॥

उद्यन्महीपालमरीचिमालीशिलीमुखश्रेणिकरावलीभिः ।
उदारभूदारघनान्धकारसंभारमुच्छिन्नतरं चकार ॥ ७९ ॥

( गदाधरस्य )

चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितः
किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता ।
सस्यानामभिलाषुकस्य भवतः श्रीरुद्रचन्द्रप्रभो
तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रमः ॥ ७९ ॥

( रामचन्द्रस्य )

शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु-
व्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् ।
खड्गव्यालूनकण्ठं तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ८० ॥

( कविराजस्य )

अथ **काव्यप्रशंसा**—

किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ८१ ॥
उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ ८२ ॥

( त्रिविक्रमस्य )

............परिमृगयमाणो मृगकुलं
मृगेन्द्रान्भिन्दानो नृपतिरपि तेने स मृगयाम् ॥ ७७ ॥
निहत निहत तूणे धत्त धत्त त्वराभि-
र्मिलत मिलत के के कुत्र कुत्र प्रयान्ति ।
इत इत इत एते यान्ति यान्तीत्यरण्या-
दतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥ ७८ ॥
उद्यन्महीपालमरीचिमालीशिलीमुखश्रेणिकरावलीभिः ।
उदारभूदारघनान्धकारसंभारमुच्छिन्नतरं चकार ॥ ७९ ॥
( गदाधरस्य )

चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितः
किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता ।
सस्यानामभिलाषुकस्य भवतः श्रीरुद्रचन्द्रप्रभो
तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रमः ॥ ७९ ॥
( रामचन्द्रस्य )

शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु-
व्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् ।
खड्गव्यालूनकण्ठं तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ८० ॥
( कविराजस्य )

अथ **काव्यप्रशंसा**—

किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ८१ ॥
उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ ८२ ॥
( त्रिविक्रमस्य )

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ ८३ ॥

( कस्यापि )

अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते
वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् ।
अर्थालंकृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां
कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ ८४ ॥

( राघवचैतन्यानाम् )

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी वाणो बभूवेति ॥ ८५ ॥

( गोवर्धनस्य )

तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते ।
यावन्नो विशति श्रोत्रे मयूरमधुरध्वनिः ॥ ८६ ॥
हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥ ८७ ॥

( त्रिविक्रमस्य ) ( त्रिलोचनस्य )

ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां
ते वन्द्या यतयो विशन्ति मतयो येषां परब्रह्मणि ।
ते श्लाध्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गना-
दृक्पाता इव तोषयन्ति हृदयं येषां गिरां भङ्गयः ॥ ८८ ॥
गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः
प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः ।
तथा जगति भारती भगवती यथा सा सुधा
सुधा भवति सुभ्रुवामधरमाधुरी म्लायति ॥ ८९ ॥

( गणेश्वरस्य )

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ ८३ ॥

( कस्यापि )

अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते
वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् ।
अर्थालंकृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां
कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ ८४ ॥

( राघवचैतन्यानाम् )

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ ८५ ॥

( गोवर्धनस्य )

तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते ।
यावन्नो विशति श्रोत्रे मयूरमधुरध्वनिः ॥ ८६ ॥
हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥ ८७ ॥

( त्रिविक्रमस्य ) ( त्रिलोचनस्य )

ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां
ते वन्द्या यतयो विशन्ति मतयो येषां परब्रह्मणि ।
ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गना-
दृक्पाता इव तोषयन्ति हृदयं येषां गिरां भङ्गयः ॥ ८८ ॥
गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः
प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः ।
तथा जगति भारती भगवती यथा सा सुधा
सुधा भवति सुभ्रुवामधरमाधुरी म्लायति ॥ ८९ ॥

( गणेश्वरस्य )

यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते
तदा गतमदा मदालसमरालबालारवाः।
न विभ्रमचरीकरी भवति चाधरी माधुरी
सुधाकरसुधाझरी मधुकथा वृथा जायते ॥ ९० ॥

उमामिमां समुद्वीक्ष्य शीतदीधितिशेखराम्।
एषा तु भारती भानुं मत्तं स्वीकृत्य नृत्यति ॥ ९१ ॥

(भानुकरस्यैतौ)

प्रवर्तस्वेति को नाम प्रवर्तेत विना रसात्।
केन प्रवर्तिता भृङ्गाः प्रवर्तन्ते सरोरुहि ॥ ९२ ॥

सुभाषितरसावलीमधुनि लम्पटोऽयं चिरा-
दटन्निखिलनाटिकाटविपु केन विश्राम्यतु।
कविव्रजमधुव्रतः समधुवाटिकानिर्मितं
क्षणं नयनगोचरीचरिकरीति यावन्न मे ॥ ९३ ॥

(एतौ लक्ष्मणस्य)

इति श्रीआङ्कोलकर**लक्ष्मणभट्ट**विरचितायां **पद्यरचनायां** पञ्चदशो व्यापारः।

**समाप्तेयं पद्यरचना।**

यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते
तदा गतमदा मदालसमरालबालारवाः ।
न विभ्रमचरीकरी भवति चाधरी माधुरी
सुधाकरसुधाझरी मधुकथा वृथा जायते ॥ ९० ॥
उमामिमां समुद्वीक्ष्य शीतदीधितिशेखराम् ।
एषा तु भारती भानुं मत्तं स्वीकृत्य नृत्यति ॥ ९१ ॥
( भानुकरस्यैतौ )
प्रवर्तस्वेति को नाम प्रवर्तेत विना रसात् ।
केन प्रवर्तिता भृङ्गाः प्रवर्तन्ते सरोरुहि ॥ ९२ ॥
सुभाषितरसावलीमधुनि लम्पटोऽयं चिरा-
दटन्निखिलनाटिकाटविपु केन विश्राम्यतु ।
कवित्रजमधुव्रतः समधुवाटिकानिर्मितं
क्षणं नयनगोचरीचरिकरीति यावन्न मे ॥ ९३ ॥
( एतौ लक्ष्मणस्य )

इति श्रीआक्कोलकरलक्ष्मणभट्टविरचितायां **पद्यरचनायां** पञ्चदशो व्यापारः ।

**समाप्तेयं पद्यरचना ।**